# स्वाराज्यसिद्धिः ।

श्रीमत्परमहंसपरिव्राजकाचार्य्य-

श्रीस्वामिभास्करानन्दसरस्वतीकृतया

कैवल्यकल्पद्रुमसमाख्यया टीकया सहिता

प्रयागनिवासिना ।

श्रीयुत चौधरी बाबू महादेवप्रसादेन

निजद्रव्यव्ययेन

बाबूरामकृष्णवर्म्मणः

काशीस्थभारतजीवननाम्नि यन्त्रालये

मुद्रयित्वा प्रकाशिता ।



सम्बत् १९४८

T

# निवेदन ।

अनेक धन्यबाद उस करुणामय जगदीश्वर को है कि जिसकी अपार कृपासे आज मुझे आप सज्जन महाशयों की सेवा में इस अर्पूब ग्रन्थ के भेंट करने का अवसर प्राप्त हुआ है। इस प्राचीन ग्रन्थ के सदुपदेश और महान आशय मुझे ऐसे रुचे कि मैंने सर्ब साधारण के प्रति इस का प्रचार होना अत्यन्त आवश्यक समझा इसी बिचार से मैंने एक दिन जगतपूज्य श्रीमान स्वामी भास्करानन्दसरस्वती जी महाराज से प्रार्थना करी कि आपकी कृपा बिना मेरा यह मनोर्थ पूर्ण नहीं हो सक्ता। उक्त श्रीमान स्वामी जी महाराज ने मेरी भक्ति और सत् उपदेश से प्रसन्न होकर मेरी प्रार्थना स्वीकार की और इस स्वारा-

T

ज्यासिद्धि नामक ग्रन्थ की अत्यन्त सरल टीका करदी जिसे मैं आप लोगों के सन्मुख भेट करताहूं आशा है कि आप लोग इस ग्रन्थ को देख और सज्जनों में इसका प्रचार कर मुझे अनुगृहित करैंगे ।

आपलोगों का अनुग्रहकांक्षी
चौधरी महादेवप्रसाद
प्रयागनिवासी ।

T

श्रीगणेशाय नमः ।

## स्वाराज्यसिद्धिः ।

मंदाक्रान्ता

गङ्गापूरप्रचलितजटास्त्रस्तभो-
गीन्द्रभीतामालिङ्गन्तीमचल-
तनयां सस्मितं वीक्षमाणः ।
लीलापाङ्गैः प्रणतजनतां नन्द-
यँश्चन्द्रमौलिर्मोहध्वान्तं हरतु
परमानन्दमूर्तिः शिवो नः॥१॥

निष्किञ्चनानां मन्दानां स्वाराज्यपदलब्धये । क्रियते भास्करानन्दस्वामिना सरलोन्वयः ॥ १ ॥

शिवः महादेवः नः अस्माकम् मोहध्वान्तम् अज्ञानान्धकारम् हरतु नाशयतु, की-

T

दृशः चन्द्रमौलिः चन्द्रमस्तकः वस्तुतस्तु परमानन्दमूर्तिः निरतिशयानन्दस्वरूपः परब्रह्म, पुनः अचलतनयाम् पर्वतसुताम् पार्वतीम् सस्मितम् मन्दहाससहितं यथा स्यात्तथा वीक्षमाणः पश्यन्, कीदृशीम् गंगापूरेण गंगाप्रवाहेण, प्रचलितजटाभ्यः अत्यन्तकम्पितजटाभ्यः स्रस्तः अधः पतितः भोगीन्द्रः शेषः तस्मात् भीताम् चकिताम् अतः आलिङ्गन्तीम् दृढं स्वाङ्के कृत्वाशिवांके निमज्जन्तीम् पुनः प्रणतजनताम् कृतप्रणामातिनम्रीभूतमुमुक्षुजनसमूहम् लीलापाङ्गैः सहजप्रीतिजकटाक्षैः नन्दयन् आनन्दयन् ॥१॥

मं०

स्मारंस्मारं जनिमृतिभयं जात निर्वेदवृत्तिर्ध्यायंध्यायं पशुपतिमुमाकान्तमन्तर्निषण्णम् । पायं पायं सपदि परमानन्द-

पीयूषधारां भूयो भूयो निज-
गुरुपदाम्भोजयुग्मं नमामि ॥

गुरुकृपया लब्धं क्रमेण सूचयन् आशी-
र्वादात्मकमङ्गलानन्तरं नमस्कारात्मकमङ्-
गलमाचरति । स्मारमिति—निजगुरुपदा-
म्भोजयुग्मम् स्वगुरुचरणकमलद्वयम् भूयो-
भूयः पुनः पुनः अहम् नमामि नमस्करोमि
किं कृत्वा जनिमृतिभयम् जन्ममरणभयम्
स्मारंस्मारम् पुनः पुनः स्मृत्वा जातनिर्वे-
दवृत्तिः उत्पन्नवैराग्यहेतुभूतविषयदोषदर्शी-
नवृत्तिकः सन् अन्तर्निषण्णम् हृदये उपविष्टम्
उमाकान्तम् उमाप्रियम् पशुपतिम् शि-
वम् ध्यायम्ध्यायम् पुनः पुनः ध्यात्वा अ-
नन्तरम् सपदि शीघ्रम् परमानन्दरूपपीयूष-
धाराम् अमृतधाराम् पायम् पायम् पुनः पुनः
पीत्वा ॥ २ ॥

T

नतिमिषेण वस्तुनिर्देशात्मकमङ्गलमाचरति, यस्मादिति—

शार्दूल वि०

यस्माद्विश्वमुदेति यत्र निवसत्यन्तेयदप्येतियत्सत्यज्ञानसुखस्वरूपमवधिद्वैतप्रणाशोज्झितम् । यज्जाग्रत्स्वपनप्रसुप्तिषु विभात्येकं विशोकं परं प्रत्यग्ब्रह्मतदस्मि यस्य कृपया तं देशिकेन्द्रंभजे ॥३॥

यस्य कृपया तत् प्रत्यग्ब्रह्म सर्वानुगतं ब्रह्म अहम् अस्मि तम् देशिकेन्द्रम् सर्वगुरुश्रेष्ठम् ज्ञानप्रदगुरुम् अहम् भजे सेवे, तत् कीदृशम् यस्मात् विश्वम् जगत् उदेति आविर्भवति यत्र यस्मिन् अधिष्ठाने निवसति अन्ते तिरोभावसमये यत् अप्येति यद्रूपं

भवति, पुनः यत् सत्यज्ञानसुखस्वरूपम् पुनः अवधिद्वैतप्रणाशोज्झितम् क्रमेण देशवस्तुकालकृतपरिच्छेदशून्यम् अथवा परिच्छेदप्रपञ्चविनाशशून्यम् पुनः यत् जाग्रत्स्वप्नप्रसुप्तिषु अवस्थासु विभाति न व्यभिचरतीतिभावः पुनः एकम् नत्ववस्थाभेदेन भिन्नम् विशोकम् शोकशून्यम् आनन्दस्वरूपम् परम् अवस्थात्रयसंबन्धरहितम् ॥३॥

अधिकारिणं वदन् कर्तव्यप्रातिज्ञांकरोति ।

अधीतेज्यादानव्रतजपसमा-<br>
धाननियमैर्विशुद्धस्वान्तानां<br>
जगदिदमसारं विमृशताम् ।<br>
अरागद्वेषाणामभयचरितानां<br>
हितमिदं मुमुक्षूणां हृद्यं किम-<br>
पि निगदामः सुमधुरम् ॥४॥

T

सुमधुरम् सुतराम् श्रवणसुखदम् हृद्यम् मनसः सुखदम् हितम् उपकारकरम् किमपि इदम् गोप्यश्रुतितात्पर्यरूपप्रकरणम् वयम् निगदामः कथयामः केषाम् हृद्यं हितं च अधीतेज्यादानव्रतजपसमाधाननियमैः अध्ययनयज्ञदानव्रतजपोपासनेन्द्रियनिग्रहैः विशुद्धस्वान्तानाम् निर्मलान्तःकरणानाम् पुनः इदं जगत् असारम् सत्यताशून्यम् विमृशताम् निश्चिन्वताम् पुनः अरागद्वेषाणाम् भोगेच्छापरानिष्टचिन्तनरहितानाम् पुनः अभयचरितानाम् प्राणिभयाजनकचेष्टावताम् पुनः मुमुक्षूणाम् मुक्तिमिच्छताम् ॥ ४ ॥

अथ सकलवेदान्तप्रवृत्तिमूलभूताध्यासे परम्परया श्रुतिं प्रमाणयति, ज्ञात्वेति—

ज्ञात्वा देवं सर्वपाशापहानिर्नाऽन्यः पन्थाश्चेति भूयो व-

चोभिः। ज्ञप्तेस्साक्षान्मुक्तिहेतुत्वसिद्धावध्यासत्वं वन्धनस्यार्थसिद्धम् ॥८॥

वन्धनस्य दुःखहेतुत्वाद्वन्धनरूपस्य जगतः अध्यासत्वम् शुक्तिरजतादिवत्आरोपितत्वम् अर्थसिद्धम् अर्थात्सिद्धम् कस्याम् अत्रएवं विधानुक्तश्रुतिस्मृतिवाक्यसंग्रहार्थः चकारस्तथा च प्रकाशं चैतन्यम् ज्ञात्वा अभेदेन साक्षात्कृत्य सर्बवन्धविनाशः भवति तथा अन्यः ज्ञानान्मुक्तिप्राप्तिसाधनरूपमार्गः न विद्यते इत्यर्थक ज्ञात्वा देवं सर्वपाशापहानिः नान्यःपन्थाश्च इति भूयोवचोभिः बहुवाक्यैः ज्ञप्तेः आत्मज्ञानस्य साक्षात्व्यवधानं विना मुक्तिहेतुत्वसिद्धौ बन्धनिवृत्तिकारणतासिद्धौ सत्याम् लोके अध्यस्तान्यस्य ज्ञाननिवर्त्यत्वाद्दृष्टेरितिभावः ॥ ८ ॥

T

ननु लोके भेदनप्रहारादि क्रियया भावपदार्थानां नाशदर्शनात् कर्मणो मुक्तिसाधनतोपपादकश्रुतिस्मृतिदर्शनाच्च भोगावहपुण्यकर्मणापि बन्धनाशो नाऽनन्तरोक्तं सेत्स्यतीत्यत आह ।

सत्यं भावं न वित्तिर्व्यपनुदति यतः कर्मनाश्यो घटादिर्मिथ्याभूतं च कर्म क्षपयति न तथा वित्तिघात्यं यतस्तत् । इत्थं सिद्धे विभागे श्रुतिशिखरगिरावित्तिघात्यः प्रतीतो बन्धो मिथ्येति सिद्धे न तदपहतये कर्मजातं समर्थम् ॥८॥

लोके घटादिभावपदार्थः कर्मनाश्यः प्र-

हारादिक्रियाविनाश्यःप्रसिद्धः यतः अतः वित्तिः ज्ञानम् सत्यम् अनारोपितम् भावम् भावपदार्थम् न व्यपनुदति न नाशयति तथा कर्म क्रिया मिथ्याभूतम् आरोपितं शुक्तिरजतादि न क्षपयति न नाशयति यतः लोके तत् मिथ्याभूतं वस्तु वित्तिघात्यम् अधिष्ठानज्ञाननाश्यम् प्रसिद्धम् इत्थम् अमुना प्रकारेण विभागे वस्तुस्वभावभेदे सिद्धे सति श्रुतिशिखरगिरा वेदान्तवाक्येन वित्तिघात्यः ज्ञानविनाश्यः सन् प्रतीतः निश्चितःबन्धः मिथ्या इतिसिद्धे तदपहतये बन्धविनाशाय कर्मजातम् अग्निहोत्रादिपुण्यकर्मसमूहः न समर्थम् निजस्वभावादितिभावः ॥ ६ ॥

नन्वेवमपि अज्ञानविरोधिज्ञानस्य अविरोधिजगद्बन्धनिवर्तकत्वं कथमित्याशंकामपनुदन् ज्ञानोपाये प्रवर्तयति, आविद्यइति–

**आविद्यो ह्येष बन्धो विरमति**

T

न विना वेदनं कर्मजालैर्मा-
लोद्भूतोऽहिरस्तं व्रजति किमु
नमस्कारमन्त्रौषधाद्यैः । एवं
निश्चित्य नागस्त्वचमिव वि-
धिना कर्मबन्धं विधूय ज्ञानो-
पाये गुरुश्रीचरणमभिगतः सेव-
मानो यतेत ॥ ७ ॥

गुरोः तत्त्वनिष्ठस्य गुरोः श्रीचरणम् अभि-
गतः संमुखंगतः सन् सेवमानः ज्ञानोपाये
श्रवणादौ यतेत यत्नं कुर्यात् किंकृत्वा एवम्
उक्तप्रकारेण निश्चित्य निश्चयंकृत्वा विधिना
शास्त्रोक्तप्रकारेण कर्मवन्धम् कर्मवन्धनम्
विधूय सम्यक् त्यक्त्वा कः किमिव नागः सर्पः
त्वचम् जीर्णकञ्चुकम् इव एवम्कथम् मालो-
द्भूतः मालायांकल्पितः अहिः सर्पः नम-

स्कारमन्त्रौषधाद्यैः उपायैः अस्तम् नाशम् किमु व्रजति किन्तु न व्रजति, तद्वत् एष बन्धः वेदनम् अधिष्ठानज्ञानम् विना कर्मजालैः कर्मसमूहैः न विरमति न नश्यति, कुतः हि यतः आविद्यः अविद्योद्भूतः अज्ञानमूलक इतियावत् श्रुत्याद्युक्तज्ञाननिवर्त्यत्वोक्त्यन्यथानुपपत्त्या ऽज्ञानकार्यबन्धोऽज्ञानमेवेति भावः ॥ ७ ॥

अथ मुक्तिसाधने मतान्तराण्यनूद्य दूषयति, केचिदिति—

केचित्कर्मैव काम्योज्झित-
मुदितपदप्राप्त्युपायं प्रतीता-
स्तच्चोपास्ति च मुक्तौ मिलि-
तमथपरे साधनं संगिरन्ते ।
अन्ये तु ज्ञानकर्मोभयमिति-

T

मतिभिः स्वाभिरुत्प्रेक्षमाणा
ज्ञानादेवेति वाक्याद्वयमिह
सहसा नानुमन्यामहे तान् ॥

केचित् भाट्टैकदेशिनः प्राभाकराश्च काम्योज्झितम् कर्मैव फलेच्छां विना कृतनित्यनैमित्तिककर्मैव उदितपदप्राप्त्युपायम् कथितमुक्तिप्राप्तिसाधनम् प्रतीताः निश्चितवन्तः अथपरे भर्तृप्रपञ्चभास्करप्रभृतयः तत्त्वोपास्ति च मिलितम् कर्म च प्राणाद्युपासनं च मिलितं मुक्तौ साधनं संगिरन्ते प्रवदन्ति अन्येतु उक्तैकदेशिनस्तु ज्ञानकर्मोभयम् मुक्तौ साधनम् इति संगिरन्ते, एतेआचार्या यतः स्वाभिरेव मतिभिः वेदार्थम् उत्प्रेक्षमाणाः कल्पयन्ते नतु तत्त्वज्ञप्रदर्शितपथेन अतः ज्ञानादेवतुकैवल्यमित्यादिवाक्यात् हेतोः इह मुक्तिसाधनविचारे वयम् तान् पक्षान् सहसा न अनुमन्यामहे नाङ्गीकुर्मः ज्ञानसा-

T

धनतया तु मोक्षसाधनतां कर्मणोनुमन्यामह एवेति भावः ॥ ८ ॥

अथ वाक्यान्नित्यनैमित्तिककर्मणोः फलान्तरहेतुत्वेपि न ज्ञानहेतुतेति वदति, पैत्र इति—

पैत्रोलोकोधिगम्यः क्रतुभिरधिगतो विद्यया देवलोको यद्वा चेतः कषायक्षपणमिह तयोः स्मार्तमेवास्तु साध्यम्। यज्ञेनेत्यादिवाक्याद्भवतु विविदिषा वेदनं तत्फलं वा ज्ञानादेवामृतत्वं नहि शशकवधूः सिंहपोतं प्रसूते ॥ ९ ॥

पैत्रोलोकः पितृलोकः क्रतुभिः नित्यनैमित्तिकयागादिकर्मभिः अधिगम्यः प्राप्यः अधिगतः निश्चितः श्रुत्या तथा विद्यया उपा-

T

सनकर्मणा देवलोकः अधिगम्योधिगतः श्रुत्या यद्वा अथवा तयोः विद्याकर्मणोः साध्यम् फलम् स्मार्तम् कषायपक्तिःकर्माणीत्यादिस्मृत्युक्तम् कषायक्षपणम् एव रागद्वेषादिसंस्काररूपहृद्गतमलनाशनमेव इह लोके अस्तु अथवा यज्ञेनेत्यादिवाक्यात् यज्ञेन दानेनेत्यादिवचनात् विविदिषा ज्ञानेच्छा वेदनं वा ज्ञानं वा तत्फलम् नित्यादिकर्मफलम् भवतु अस्तु यज्ञादीनां विविदिषापदार्थज्ञानेच्छयोरन्वयविकल्पादितिभावः तथापि अमृतत्वम् मोक्षस्तु ज्ञानादेव भवति हि यतः शशकवधूः शशस्त्री सिंहपोतम् सिंहवालकम् न प्रसूते न जनयाति स्वभावः कारणं परमितिभावः ॥ ९ ॥

विरुद्धाधिकारित्वाज्ज्ञानकर्मणोः साहित्येन मुक्तिजननयोग्यता नेति सोपहासमाह, अर्थीति—

**अर्थी दक्षो द्विजोहं बुध इति**

मतिमान्कर्मसूक्तोधिकारी शान्तो दान्तः परिव्राडुपरमपरमो ब्रह्मविद्याधिकारी । इत्थं भेदे विवक्षन्समुदितमुभयं मुक्तिहेतुं सुशीतं नीरं वैश्वानरं चोभयमहह तृषोच्छेदकामः पिबेत्सः ॥ १० ॥

अर्थी धनवान् दक्षः समर्थः द्विजः त्रैवर्णिकः बुधः पण्डितः अहम् इति मतिमान् इत्याद्यभिमानी कर्मसु अधिकारी उक्तः मीमांसाशास्त्रे तथा शान्तः रागादिहीनः दान्तः वशीकृतवाह्यान्तरेन्द्रियः परिव्राट् सन्न्यासी उपरमपरमः देहधारणातिरिक्तव्यापारनिवृत्तिशीलः ब्रह्मविद्याधिकारी ब्रह्मज्ञानाधिकारी उक्तः वेदान्ते इत्थमुक्तप्रकारेण भेदे

सति उभयम् ज्ञानं कर्म च समुदितम् मुक्तिहे-
तुम् विवक्षन् वक्तुमिच्छन् सः वादी अहहइति
खेदे तृषोच्छेदकामः पिपासानिवृत्तिकामःसन्
सुशीतम् नीरम् सुशीतलजलम् वैश्वानरं च
अग्निं च उभयम् सहद्वयम् पिबेत् द्वयोः सह-
पानं कुर्यादिति संभावनास्तीतिभावः ॥१०॥

उक्तमुक्तिहेतुज्ञानस्वरूपं वदन् असंभावना-
निवृत्तये विचारः कर्तव्य इत्याह, ज्ञानमिति—

ज्ञानं चाप्यद्वितीयस्वरससु-
खघनानन्तचिन्मात्ररूपब्रह्मा-
त्मैकत्वबोधः स भवति सुम-
तेस्तत्त्वमस्यादिवाक्यात् । दे-
हाद्यध्यासदार्ढ्याच्छ्रुतमपि
सहसा नैव संभावनीयं ब्रह्मत्वं

स्वस्य तस्मान्नयगुरुवचनैः सा-
धु मीमांसनीयम् ॥ ११ ॥

ज्ञानं चापि ज्ञानमपि च ज्ञानमपि तु अ-
द्वितीय सर्वभेदरहित स्वरसस्वयंसारभूतसु-
खघनसुखमूर्त्यनन्तसर्वपरिच्छेदशून्यचिन्मा-
त्ररूपचैतन्यस्वरूपब्रह्मात्मनोः एकत्वबोधः
अभेदानुभवः स उक्तविधबोधः सुमतेः सुबु-
द्धेः शुद्धबुद्धेः मुख्याधिकारिणःपुरुषस्य तत्त्व-
मस्यादिवाक्यात् भवति श्रुतम् अपि ज्ञात-
मपि स्वस्य ब्रह्मत्वम् देहाद्यध्यासदार्ढ्यात्
असंख्यजन्मद्वैतवासनया देहपुत्रादिषु अह-
न्ताममातरूपतादात्म्याऽध्यासस्य दृढत्वात्
विपरीतभावनाया दृढत्वात् इतियावत् सहसा
नैवसंभावनीयम् आशु संभावयितुमशक्यम्
तस्मात् कारणात् नयगुरुवचनैः युक्तिगुरू-
पदेशैः साधु यथास्यात्तथा मीमांसनीयम् नि-

श्रयपर्यन्तम् स्वस्य ब्रह्मात्मत्वम् विचारणीयम् ॥ ११ ॥

अथ बिचाराङ्गजीवविषयकानेकमतमादौ दर्शयति, देहमिति—

देहं केपि वदन्ति खानि तु परे प्राणान् मनश्चापरे बुद्धिं च क्षणिकां स्थिरामथपरे केचिच्चितं निःसुखाम् । आत्मानं जड़चित्स्वभावमपरे चिद्वज्जडं चेतरे सत्यज्ञानसुखाद्वितीयमपरे तत्रास्य को निश्चयः ॥ १२ ॥

केपि चार्वाकाः देहम् आत्मानम् वदन्ति परे तु चार्वाकाः खानि इन्द्रियाणि आत्मा-

नम् वदन्ति अपरे प्राणान् आत्मानं वदन्ति तेभ्योप्ययपरे ते· मनःआत्मानं वदन्ति परे वैनाशिकाः क्षणिकाम् बुद्धिम् वृत्तिज्ञानरूपाम् आत्मानं वदन्ति अथ अनन्तरम् परे भास्करादयः स्थिराम् बुद्धिम् विज्ञानमयकोशम् आत्मानं वदन्ति केचित् सांख्यपातञ्जलादयः निःसुखाम् सुखदुःखादिसंगशून्याम् चितम् चिन्मात्रम् आत्मानं वदन्ति अपरे भाट्टाः जड़चित्स्वभावम् चिज्जड़रूपम् आत्मानम् वदन्ति इतरे प्राभाकरनैयायिकादयः चिद्वज्जड़म् चिद्युक्तज्ञानगुणजड़द्रव्यरूपम् आत्मानं वदन्ति अपरे वेदान्तिनः सत्यज्ञानसुखा ऽद्वितीयम् निर्विशेषनित्यज्ञानानन्दस्वरूपम् आत्मानं वदन्ति तत्र उक्तपक्षेषु अस्य जिज्ञासोः को निश्चयः न कोपि निश्चयो भवति ॥ १२ ॥

आहुः केचिदणुं शरीरसद्द-

T

शं केचिद्विभुं तं परे ते तं मानसगोचरं तदपरे नित्यानुमेयं जगुः । अन्ये चिद्विषयं परे तु परमस्वज्योतिराभ्यन्तरं सत्येवं श्रुतियुक्तिभिर्विविदिषोर्युक्तो विचारो मुहुः ॥१३॥

केचित् पाशुपतपाञ्चरात्राद्यागमज्ञाः तम् आत्मानम् अणुम् परमाणुपरिमाणम् आहुः वदन्ति केचित् आर्हन्तादयः शरीरसदृशम् देहपरिमाणम् तमाहुः परे नैयायिकादयः विभुम् व्यापकम् तमाहुः ते उक्ताः त्रयः वादिनः तम् आत्मानम् मानसगोचरम् मानसप्रत्यक्षविषयम् जगुः ऊचुः तदपरे तेभ्योन्ये साङ्ख्यादयः नित्यानुमेयम् विषयप्रकाशादिना केवलम् अनुमानगम्यम् तं जगुः

अन्ये वैनाशिकाः चिद्विषयम् वृत्तिज्ञानप्रकाश्यम् तं जगुः अपरे वेदान्तिनः आभ्यन्तरम् पञ्चकोशेभ्योप्यन्तस्थम् परमस्वज्योतिः सर्वप्रकाशोत्कृष्टस्वयंप्रकाशम् तं जगुः एवम् उक्तप्रकारेण सति मतभेदे सति विविदिषोः जिज्ञासोः श्रुतियुक्तिभिः मुहुः पुनः पुनः साक्षात्कारपर्यन्तम् विचारः युक्तः कर्तुमुचितः ॥ १३ ॥

अथ विचाराङ्गेश्वरविषयकानेकमतं दर्शयति, एवमिति—

**एवं विश्वस्य हेतुं प्रकृतिमभिदधुः केपि केचित्पराणूनीशेनाधिष्ठितां स्तान्कतिचन कतिचिन्नश्वरज्ञानमेव । अन्ये शून्यं स्वभावं कतिचनसमयं**

केपि केचिद्यदृच्छां कर्मान्ये ब्रह्ममायाशवलितमपरे सोपि तस्माद्विमृश्यः ॥ १४ ॥

एवम् जीवात्मानमिव केपि कापिलाः विश्वस्य हेतुम् जगतः उपादानकारणम् प्रकृतिं-प्रधानम् अभिदधुः ऊचुः केचित् वैनाशिकाः आर्हन्ताश्च पराणून् भूतचतुष्टयपरमाणून् विश्वस्य हेतुमभिदधुरिति सर्वत्र योज्यम् कतिचन पातञ्जलाः काणादगौतमीयाश्च ईशेनाधिष्ठितान् ईश्वरेणप्रेरितान् साचतेच ते इत्येकशेषः तान् प्रकृतिम् परमाणूंश्च तत्र पातञ्जलाः प्रकृतिमिति विवेकः कतिचित् विज्ञानवादिनः नश्वरज्ञानमेव क्षणिकविज्ञानमेव अन्ये माध्यमिकाः शून्यम् कतिचन लोकायतिकाः स्वभावम् पाठान्तरे हैरण्यगर्भाः हिरण्यगर्भम् इत्यर्थः केपि मौ-

T

हूर्तिकाः समयम् कालम् केचित् यदृच्छाम् आकस्मिकत्वम् अन्ये मीमांसकाः कर्म अपरे वेदान्तिनः मायाशबलितम् मायया प्राप्तविचित्रभावम् ब्रह्म तस्मात् मतभेदात् सोपि जगद्धेतुरपि विमृश्यः जिज्ञासुना विचारणीयः ॥ १४ ॥

अथ स्वमतसर्वस्वं ब्रह्मलक्षणप्रमाणाभ्यां बोधयन् विवक्षितं सर्वं प्रतिजानीते,

यस्मादिति—

यस्माद्धुत्पत्तिगुप्तीक्षतिरपि
जगतां यच्च शास्त्रैकयोनिः स-
र्वज्ञं मायया यत्सहजसुखस-
दद्वैतसंवित्स्वरूपम् । तद्ब्रह्म
स्वप्रकाशं श्रुतिशिखरगिरां
सैव तात्पर्यभूमिः स्वात्मासौ

यं विदित्वा जनिमृतिजलधिं
निस्तरन्तीह सन्तः ॥१५॥

जगताम् सकलकार्याणाम् उत्पत्तिगुप्ती उत्पत्तिपालने क्षतिरपि नाशश्च मायया यस्माद्भवति पुनः यत् मायया शास्त्रैकयोनिः शास्त्रैकप्रमाणकम् केवलं शास्त्रगम्यम् सर्वज्ञं च पुनः यत् सहजसुखसदद्वैतसंवित्स्वरूपम् स्वभावभूतसुखस्वरूपम् नित्यद्वैतसंबधशून्यज्ञानस्वरूपम् तद्ब्रह्म तच्च ब्रह्म कीदृशम् स्वप्रकाशम् स्वसाक्षिकम् श्रुतिशिखरगिराम् वेदान्तवाक्यानाम् सा एव उक्तब्रह्मैव तात्पर्यभूमिः तात्पर्यलक्ष्यम् असौ ब्रह्म स्वात्मा निजस्वरूपम् यम् ब्रह्मरूपनिजात्मानम् विदित्वा ज्ञात्वा सन्तः महात्मानः जनिमृतिजलधिम् जन्ममरणरूपसमुद्रम् इह अस्मिन् जन्मनि निस्तरन्ति नितरां लङ्घयन्ति ॥ १५ ॥

जगत्कारणवादे अन्योक्तकारणायोग्यतां स्वोक्तकारणयोग्यतां चाह,

साङ्ख्यैरिति—

साङ्ख्यैः प्रख्यापितं न क्षमिह जगतां निर्मितौ तत्प्रधानं हेतुर्नैतादृशेर्थे प्रभवति गदितस्तार्किकैरीश्वरोपि । नाणुः काणादबौद्धक्षपणकभणितो नापि निःसाक्षिशून्यं तस्मादस्माकमेव श्रुतिगदितपरब्रह्म सिद्धं निदानम् ॥ १६ ॥

इह अस्याम् जगतां—निर्मितौ सकलकार्याणाम् उत्पादने साङ्ख्यैः प्रख्यापितम् कापिलपातञ्जलैः प्रसिद्धिं प्रापितम् तत्प्रधानं

T

नक्षमं न समर्थं तथा तार्किकैः केवलतर्कावलम्बिभिः पातञ्जलगौतमकाणादतान्त्रिकपाशुपतैः उक्तः हेतुः निमित्तकारणरूपः ईश्वरोपि एतादृशेर्थे उक्तसकलकार्योत्पादनरूपे न प्रभवति समर्थो नास्ति, तथा काणादबौद्धक्षपणकभणितः अणुः कणादशिष्य बुद्धशिष्यार्हन्त कथितः परमाणुः एतादृशेर्थे न प्रभवति तथा कैश्चिदुक्तम् निःसाक्षिशून्यम् अपि असाक्षिकम् शून्यमपि एतादृशेर्थे न प्रभवति तस्मात् आस्माकम् अस्माकं वेदान्तिनामिदम् श्रुतिगदितपरब्रह्म एव एतादृशेर्थे निदानम् आदिकारणम् सिद्धम् ।१६।

अथ विशेषतः कपिलमतं खण्डयति, द्वाभ्याम् नेति—

नाचैतन्यात्प्रधानं प्रभवति चलितुं तन्निसर्गक्रियं चेन्नि-

त्यं सर्गप्रसङ्गो नियतिरपि यतः सर्गपूर्वा नपूर्वम् । बन्धो निर्हेतुकः स्यात्कथमथ न भवेद्बन्धमोक्षाव्यवस्था निःसौख्यं नापि मोक्षं स्पृहयति मतिमान् कापिलं तेन दुष्टम् ॥१७॥

प्रधानम् गुणत्रयसाम्यरूपम् चलितुम् पुरुषभोगाय सृष्टौ प्रवर्तितुम् न प्रभवति न समर्थम् कुतः अचैतन्यात् जडत्वात् चेत् यदि तत् प्रधानम् निसर्गक्रियम् प्रवृत्तिस्वभावम् मन्येत तर्हि नित्यसर्गप्रसङ्गः सृष्टिरेव स्यात्सदा नप्रलय इतिभावः जलादिजड़प्रवृत्तौ निम्नत्वादिवददृष्टं हेतुर्न सम्भवति यतः नियतिरपि अदृष्टमपि सर्गपूर्वा प्रवृत्त्या सृष्टौ सत्यां भवति न पूर्वम् शरीरकार्यत्वा-

दृष्टस्य प्रवृत्तेः पूर्वं सृष्ट्यन्तरसिद्धादृष्टस्य हेतुत्वे तत्सृष्टिहेतुप्रवृत्तिहेत्वदृष्टान्तरं कल्प्यमनन्योन्याश्रयायेत्यनवस्थान्तो दोष इति भावः किं च पुरुषस्य सर्वथा सङ्गशून्यस्य कपिलमते बन्धः निर्हेतुकः स्यात् कारणसम्बन्धाङ्गीकारेऽसङ्गत्वक्षतेः अथ अनन्तरम् बन्धमोक्षाऽव्यवस्था अस्य बन्धः अस्य मोक्षः इति व्यवस्थाया अभावः कथं न भवेत् किन्तु सम्बन्धं विनापि प्रधानस्य बन्धमोक्षापादकत्वेन मुक्तस्यापि बन्धो बद्धस्यापि मुक्तिस्तुल्यकारणसत्त्वादिति रूपो भवेदेव किं च मतिमान् बुद्धिमान्पुरुषः निःसौख्यम् निरानन्दरूपम् मोक्षमपि न स्पृहयति न वाञ्छति का वार्तान्यपदार्थस्य कापिलानां च तादृश एव मोक्ष इति न कोपि मनीषी मुमुक्षुः स्यादिति भावः तेन हेतुना कापिलम् कपिलमतम् दुष्टम् सदोषमग्राह्यमिति भावः॥

किं चाकर्तैव भोक्ता यदि बत
कृतहा नाकृताभ्यागमः स्यात्
कीदृग्भोगोप्यसङ्गे ऽनतिश-
यिनि भवेत्तेन भोग्यस्य कोऽ-
र्थः । कीदृक् कस्याविवेकः क-
थमथ स भवेद्भोगहेतुर्विवेकः
कस्य स्यात्तेन किं स्यादिति
च विमृशतो दुर्वचं ब्रह्मणो-
पि ॥ १८ ॥

किंच कर्तृताप्रधाने पुरुषे च भोक्तृतेति कपिलमते यदि अकर्तैव सन् पुरुषो भोक्ता तर्हि बतेति खेदे पुरुषाकृतकर्मफलानां पुरुषेभ्यागमः प्रधाने च फलादर्शनात्प्रधानकृतकर्मणां हानिश्च स्यात् एतत्परिहाराया-

न्यकृतकर्मफलान्यगामित्वाङ्गीकारेन्यभोजनेनान्यतृप्तिप्रसङ्ग इति भावः स्यादेतत् असङ्गे सम्बन्धमात्रशून्ये अतएव अनतिशयिनि किञ्चित्सम्बन्धकृतातिशयशून्ये पुरुषे भोगोपि कीदृक् स्यात् प्राक् पश्चाद्वाकिञ्चित्सम्बन्धातिशयमन्तरा कीदृशोपि भोगएव न सम्भवति किञ्च तेन पुरुषभोगेन भोग्यस्य प्रधानस्य कोर्थः कः स्वार्थः जड़े स्वार्थानुसन्धानासम्भवेन न कोपि स्वार्थः स्वार्थमन्तराप्रवृत्तिरेव न संभवतीति भावः पुरुषप्रधानयोः परस्पराविवेको भोगे प्रवृत्तिहेतुरिति चेत् अविवेकः कीदृक् अभावरूपश्चेदपसिद्धान्तः नाप्यैक्यज्ञानम् वास्तवभिन्नयोरैक्यस्यवास्तवस्यासम्भवात् मिथ्याया अनङ्गीकारात् किञ्च अविवेकः कस्य जड़त्वासङ्गत्वाभ्यां प्रकृतिः पुरुषो वा न तदाश्रय इति भावः अथ अनन्तरम् सः अविवेकः भोगहेतुः कथम् केन प्रकारेण भवेत् असङ्ग-

त्वात्पुरुषस्य किञ्च मोक्षहेतुतयाङ्गीकृतस्तैः विवेकः कस्य स्यात् जडासङ्गयोर्नकस्यापि किञ्च तेन विवेकेन किं स्यात् असङ्गे बन्धासंभवेन तन्निवृत्त्यादि न किमपि फलं स्यात् इति उक्तप्रकारेण विमृशतो विचारयतः ब्रह्मणोपि दुर्वचम् दुर्निरूपणीयम् कपिलमतम् इति शेषः ॥ १८ ॥

अथाचेतनप्रधानपरमाणूनां प्रवर्तकतया केवलनिमित्तकारणं जगत ईश्वर इति योगिकणादगौतममाहेश्वरमतं खण्डयति द्वाभ्याम्—

नेशोधिष्ठातुमीशो तनुकरणगुणस्तार्किकाणां प्रधानं स्याच्चेत्तन्वक्षवत्त्वं सुचरितदुरितोद्भूतभोगप्रसङ्गः । दुःखाढ्यं

T

कुर्वतोस्य प्रसरति विषमाचा-
रनैर्घृण्यदोषः कर्मेप्सोश्चक्रका-
वस्थितिहतिविफलत्वान्यथा
सिद्धयः स्युः ॥ १६ ॥

तार्किकाणाम् तर्केणैव कारणं निरूपयतां अतनुकरणगुणः ईशः शरीरेन्द्रियेच्छाप्रयत्नादिगुणहीन ईश्वरः निरवयवं नीरूपत्वेनाप्रत्यक्षं प्रधानम् अधिष्ठातुम् प्रवर्तयितुम् नेशः न समर्थः प्रधानमुपलक्षणं परमाणूनामपि चेद्यदि तन्वक्षवत्त्वम् शरीरेन्द्रियादिमत्वम् स्यात्तर्हि सुचरितदुरितोद्भूतभोगप्रसङ्गः पुण्यपापोत्पन्नभोगप्रसङ्गः ईश्वरे स्यात् शरीरादेर्भोगसामग्रीत्वनियमादितिभावः किञ्च दुःखाढ्यम् दुःखप्रधानम् जगत् कुर्वतः रचयतः अस्य अनवस्थाभिया स्वतन्त्रेश्वरस्य विषमाचारनैर्घृण्यदोषः प्रसरति

विविधसुखदुःखिजनरचनया विषमाचरणदोषः अतिदुःखिरचनया निर्दयत्वदोष इति विवेकः अथोक्तदोषपरिहाराय कर्मेप्सोः सुखदुःखप्रदत्वे प्राणिकर्मसापेक्षस्य अस्याङ्गीकारे चक्रकाऽवस्थितिहतिविफलत्वान्यथासिद्धयः स्युः तत्र प्राणिकर्मणेश्वरप्रवृत्तिः तया च प्रधानप्रवृत्तिद्वारा सृष्टिः तया च शरीरादिसिद्ध्या कर्म कर्मणा चेश्वरप्रवृत्तिरिति चक्रवद्भ्रमणम् एतदभावाय पूर्वपूर्वसृष्टिगतकर्मेप्सुत्वे अवस्थितिहतिः अनवस्था नचेयं प्रत्यक्षसिद्धवीजाङ्कुरवत्प्रामाणिकी कर्मणा ईश्वरप्रवृत्तौ हेतुत्वे प्रधानप्रवृत्तौ चेश्वरस्य हेतुत्वे गौरवात् प्रधानप्रवृत्तिरेव कर्मणास्तु तथाचेश्वराङ्गीकारो विफलः किञ्च कर्मेप्सुत्वे मायाशवलत्वस्य गले पतितत्वात् अन्यथा पृथक् निमित्तेश्वरकल्पनं विनैव उपादानभूतशवलब्रह्मणैव जगत्सिद्धिरिति विवेकः ॥१९॥

सर्वज्ञः सर्वलिप्सुः सकलकृ-

तियुतो नित्यमीशो यदिस्या-
त्सर्वं कार्यं सदास्यादुदयभृ-
तिलयायौगपद्येन च स्युः ।
वाह्योपादानवत्स्यात्तनुकरण-
धियां विश्वसर्गेऽव्यपेक्षा निस्त-
र्कं चानुमानं कृतिरपि हि यत-
श्चेष्टयार्थं विधत्ते ॥ २० ॥

किंच यदि नित्यम् सततम् सर्वविषयक-
ज्ञानेच्छाकृतियुतः ईशः स्यात् तर्हि सर्वं कार्य-
म् फलपुष्पादि सदा स्यात् जगदुत्पत्तिपा-
लनप्रलयाश्च यौगपद्येन एकदैव स्युः किंच
यदि स्वस्माद्भिन्नपरमाण्वाद्युपादानमपेक्षेते-
श्वरस्तर्हि वाह्योपादानवत् शरीरेन्द्रियबुद्धी-
नामपि जगदुत्पत्तौ व्यपेक्षा स्यात् तस्य
किंच ईश्वरसाधकानुमानमपि निस्तर्कम् व्य-

भिचारशङ्कानिवर्तकतर्कशून्यम् नच यत्नवत एव कार्यजनकताकुलालादेर्दृष्टेति क्षित्याद्यनुकूलयत्नाश्रयतयेश्वरः सेत्स्यति यतः यस्मात् कृतिरपि हि यत्नोपि हि चेष्टया शरीरक्रियया अर्थम् कार्यम् विधत्ते कुरुते तथा च यत्नस्य शरीरक्रियां प्रति कारणत्वेपि क्षित्यादिसकलकार्ये प्रत्यकारणतया नोक्तविधयापीश्वरसिद्धिरितिभावः ॥ २० ॥

अथ परमाणुकारणतां खण्डयति, कस्मादिति—

कस्मादण्वोः क्रियास्यात्कथमथ मिलितौ निष्प्रतीकौ कथं वा कार्यं ताभ्यां तृतीयं किमिति च न महत्पारिमाण्डल्यतः स्यात् । तेभ्यः कस्मान्महान्स्यात्किमिति पुनरसा-

## वेव नित्यो न ते स्यान्नित्यश्चा-णुः कथं वा निरवयव इति ब्रू-ह्यसत्कार्यवादिन् ॥ २१ ॥

हे असत्कार्यवादिन् मृदादिकारणे सर्वथा असदविद्यमानमेव कार्यं घटादि पश्चादुत्पद्यते इति वादिन् द्व्यणुकोत्पत्तये संयोगाय सर्गादौ अण्वोः परमाण्वोः क्रिया कस्माद्धेतोः स्यात् ईश्वरेच्छाहेतोरनन्तरपद्ये दूषितत्वात् अथ अनन्तरम् निष्प्रतीकौ निरवयवौ अणू कथम् मिलितौ संयुक्तौ स्याताम् संयोगस्यैकदेशवृत्तित्वनियमात् कार्यम् द्व्यणुकम् ताभ्याम् कारणपरमाणुभ्याम् तृतीयम् सर्वथा भिन्नम् कथं वा स्यात् कारणावयवातिरिक्तावयवस्य कार्येनुपलम्भात् च पुनः कारणगुणानां कार्ये सजातीयगुणान्तरोदये हेतुताया द्व्यणुकादौ दर्शनात् पारिमाण्डल्यतः पर-

माणुनिष्ठपरिमाणात् द्व्यणुकं महत् किमिति न स्यात् त्र्यणुकवदिति भावः अन्यथा तेभ्यः द्व्यणुकेभ्यः जातस्त्र्यणुकपदार्थः महान् महत्त्वपरिमाणवान्कथं स्यात् पुनः किं च असौ एव त्र्यणुकपदार्थ एव नित्यः ते तव किमिति न स्यात् परमाणुकल्पना किमर्थेति भावः दृश्यद्रव्यस्य सावयवत्वानित्यत्वनियमे तु मूर्तद्रव्यस्यापि तथा नियम इति अणुर्वा परमाणुर्वा नित्यो निरवयवश्च कथं स्यात् ॥ २१ ॥

अथ क्षणिकबाह्यार्थवादिबौद्धमतं तिरस्करोति त्रिभिः, वाह्येति—

वाह्यं भोग्यं प्रजल्पन्क्षणिकमणुचयं भोक्तृसंघातमन्तः स्कन्धानां पञ्चकं चेद्दृशमिति सुगतः पृच्छ्यतां वेदवाह्यः ।

T

किं ते मानान्तरेण प्रमितमि-
दमुत प्रौढिरेषा त्वदीया किं वा
मोहासलापः किमथ जड़ज-
गद्विप्रलिप्सा कुबुद्धे ॥२२॥

सुगतः बुद्धः इति वक्ष्यमाणरीत्या पृच्छ्य-
ताम् कीदृशः वेदवाह्यः वेदविरोधी पुनः वा-
ह्यम् शरीराद्बहिः स्थितम् सर्वभूतभौतिकम्
क्षणिकम् उत्पत्तिक्षणमात्रस्थायिनम् अणुच-
यम् भूतचतुष्टयपरमाणुराशिरूपम् भोग्यं प्र-
जल्पन् तथा अन्तः शरीरान्तः ईदृशम् वा-
ह्यवत्क्षणिकम् स्कन्धानाम् रूप १ विज्ञान २
वेदना ३ संज्ञा ४ संस्काराख्यानाम् सविष-
येन्द्रिया १ हङ्कारेन्द्रियनिर्विकल्पज्ञान २
सुखदुःखज्ञान ३ सविकल्पज्ञान ४ रागद्वेषध-
र्माधर्मादिरूपाणाम् पञ्चकम् भोक्तृसंघातं च
भोक्तृसमुदायं च प्रजल्पन् हे जड़ हे कुबुद्धे

ते तव मानान्तरेण प्रत्यक्षाद्यन्यमानेन इदम् क्षणिकत्वादि प्रमितम् निश्चितम् किम् उत अथवा एषा क्षणिकत्वादिकल्पना त्वदीया प्रौढिः त्वद्बुद्धिवैभवम् किंवा एषः त्वदीयः प्रलापः व्यर्थवचः मोहात् भ्रान्त्या किमथ किंवा जगद्विप्रलिप्सा जनवञ्चनेच्छा अकारणद्वेषाद्वेदमार्गाद्भ्रंशनाय जनमनोरञ्जनायाप्रामाणिककल्पनेति भावः ॥ २२ ॥

संघीभावः कथं वा चलनविरहिणां भङ्गुराणामणूनां संघोनन्यः कथं वा विषयपदमियात्कश्च संघं विधत्ते । स्कन्धानां सन्निपातः कथमिव कियतां भोक्तृता का च धारा कस्यस्तां भोगमोक्षौ वद जड़

सफलं केन वा दर्शनं ते ॥२३॥

चलनविरहिणाम् कारणासंभवात् क्रिया-रहितानाम् भङ्गुराणाम् क्षणिकत्वेन क्रियोत्पत्तिक्षणास्थायिनाम् अणूनाम् कथम् वा केन प्रकारेण च देहादिरूपेण संघीभावः वा पुनः त्वन्मतेणुभ्यः अनन्यः अभिन्नः संघः देहादिरूपपरमाणुराशिः विषयपदम् कथम् इयात् अणूनामिन्द्रियविषयत्वायोग्यतया इन्द्रियगोचरत्वं कथं प्राप्नुयात् च पुनः त्वन्मते देहादिसंघातातिरिक्तचेतनस्य कस्यचिदभावात् भूतभौतिकसंघम् कः विधत्ते कः करोति स्कन्धसंघः करोतीति न स्कन्धानां सन्निपातः संघः कथमिव केन प्रकारेणेव एतत्संघोपि कर्त्रन्तरापेक्षा तुल्यैवेति भावः किंच त्वन्मते समुदायस्यावयवानन्यत्वेन पञ्चसु कियतां भोक्तृता कर्तृतेति यावत् अहमाकारविज्ञानधारास्कन्धस्य कर्तृ-

तेत्यपि न, धारा च का धारापि का क्षणिकविज्ञानमेव तथा च क्षणान्तरास्पर्शित्वेन कथं सा कर्त्री भोक्त्री वा एवं च भोगमोक्षौ कस्य-स्ताम् स्थायिभोगमोक्षेच्छाकर्तुरभावेन न कस्यापि तथा च हे जड़ त्वम् वद कथय ते तव दर्शनम् शास्त्रम् केन वा केन फलेन प्रकारेण वा सफलम् ॥ २३ ॥

नाविद्यादिप्रवृत्तेर्द्विविधसमुदयस्तेयदेकैकसन्तानश्यन्नुत्पादनेन प्रभवति किमरे हेत्वसंबन्धिकार्यम् । तच्चेन्निर्हेतुकं स्यात्करणविफलतास्वप्रतिज्ञाविरोधौ त्रैविध्यं चाप्यभावे कथमिति वितथो बुद्धबन्धोः-प्रलापः ॥ २४ ॥

T

द्विविधसमुदयः उक्तभोक्तृभोग्यसमुदायः अविद्यादिप्रवृत्तेः कार्यकारणभावेन अविद्यादीनां निरन्तरप्रवृत्तेः हेतोः न स्यात् कुतः यत् यस्मात् ते अविद्यादयः एकैकसन्नाः एकैकस्मिन्नष्टाः एकैकोत्पत्तिहेतुत्वेपि कथंचित् क्षणिकानामुत्पन्नानेकसंघीभावेन हेतुता एकैककार्योत्पत्तिक्षणएवनष्टत्वादितिभावः वस्तुतस्तु उत्पत्तावपि न हेतुत्वम् यस्मात् नश्यन् स्वयं विनश्यन्पदार्थः उत्पादने न प्रभवति स्वविनाशक्षणे कार्योत्पादने न समर्थो भवति कार्येणासंवन्धादिति भावः इष्टत्वेत्वाह अरे किं कार्यम् हेत्वसंवन्धि कारणसंवन्धं विना न किंचित्कार्यमिति भावः चेत् यदि तत् कार्यम् निर्हेतुकम् कारणसम्बन्धं विनैव स्यात् उत्पद्येत तर्हि करणविफलतास्वप्रातिज्ञाविरोधौ स्याताम् विनैव कारणं कार्योत्पत्तिप्रसङ्गेन तत्तत्कार्ये प्रतिलोकेङ्गीकृततत्तत्कारणानां विफलता तथा चतुर्विधान्हेतून्प्रती-

त्य चित्तचैत्ता उत्पद्यन्त इतिसूत्रस्वप्रतिज्ञा-विरोधः च पुनः त्वन्मते अभावे त्रैविध्यमपि कथम् अभावस्यावस्तुत्वेनाङ्गीकारात्कार-णादिकिंचित्सम्बन्धस्य तत्रासत्त्वेन विशेषस्य दुर्निरूप्यत्वादितिभावः इति उक्तप्रकारेण बुद्धबन्धोः कुत्सितबुद्धस्य प्रलापः विरुद्धाने-कवादः वितथः न सम्यक् ॥ २४ ॥

स्वप्नवद्विनापि वाह्यार्थं सर्वाकारज्ञानेनै-वाखिलव्यवहारसिद्धेर्बाह्यार्थोत्पत्त्य-नुपपत्तेश्च विज्ञानैकवादिनो बु-द्धस्य मतं खण्डयति,नेति—

नापोद्यं मानसिद्धं कथमिव विविधं ज्ञानमर्थापलापे बा-धोर्थानां न दृष्टो वहिरिति च पदं न प्रसिद्धार्थमृच्छेत् । वेद्या

विज्ञानभेदाः कथमथ विविधा वासना वा कुतः स्युः किं च प्रागुक्तदोषाःक्षणिकचितिहतस्तेन विज्ञानवादः ॥२५॥

मानसिद्धम् प्रत्यक्षादिसिद्धं वाह्यघटादिवस्तु नापोह्यम् नास्तीति वाच्यम् न किंच अर्थापलापे वाह्यार्थास्वीकारे ज्ञानम् विविधं कथमिव नानाकारं कथमिव स्यात् विषयवैचित्र्यतन्त्रत्वात्तस्य स्वप्ने इव वासनावैचित्र्याज्ज्ञानवैचित्र्यमिति चेत् अर्थानाम् जाग्रत्पदार्थानाम् वाधो न दृष्टःतथा सति स्वाप्नानामिव वाधः स्यात् च पुनः वहिः इति पदम् प्रसिद्धार्थम् प्रसिद्धं कंचिदर्थम् न ऋच्छेत् न प्राप्नुयात् निरालम्बमेव वहिः पदं स्यात् किंच विज्ञानभेदाः ज्ञानानां व्यावृत्तयो वैलक्षण्यादीति च कथं वेद्याः ज्ञातुं शक्याः

ज्ञानानां क्षणिकत्वात् स्थायिज्ञात्रन्तराभावात् अथ ज्ञानरूपाखिलपदार्था इत्यङ्गीकारानन्तरमपि विविधाः वासना वा वासना एव कुतः कस्माद्धेतोः स्युः ज्ञानानां हेतुत्वेन्योन्याश्रयादयः हेतुभूतबाह्यार्थो नास्त्येवेति भावः किंच क्षणिकचिति क्षणिकविज्ञाने प्रागुक्तदोषाः अनन्तरपद्योक्तदोषाः क्षणिकानां कारणत्वानुपपत्त्यादयः स्युः तेन हेतुना क्षणिकविज्ञानवादः हतः विनष्टः ॥ २५ ॥

अभावाज्जगदुत्पद्यते शून्याद्वेति
मतं खण्डयति, नेति—

नाभावाद्भावजन्म क्वचिदपि कलितं निर्विशेषाद्विचित्रं न स्यात्तेनानुविद्धे ह्यसदसदिति च प्रत्ययः स्यादशेषे । के-

नाभावप्रथा ते किमिति न स-
कलं सर्वतः स्यादभीष्टं सर्वेषां
स्यादयत्नं किमिति जड़ भवा-
नात्मघाते प्रवृत्तः ॥२६॥

क्वचिदपि कुत्रापि अभावात् भावजन्मभा-
वपदार्थोत्पत्तिः न कलितम् न ज्ञातम् तथा-
सति खपुष्पादेरपि शस्यादिस्यादितिभावः
किंच निर्विशेषात् एकविधशून्यरूपाभावात्
विचित्रम् नानाविधजगत्कार्यम् न स्यात् किं
च कार्यंकारणान्वितंभवति तथाच तेन अ-
भावेन अनुविद्धे अन्विते अशेषे सर्वस्मिन् ज-
गति हिः प्रसिद्धौ यद्यदन्वितं तत्रतत्प्रत्ययः
प्रसिद्धः तथाच असत् असत् इतिचं इत्येव
प्रत्ययःस्यात् किंच ते तव अभावप्रथा अभा-
वरूपकारणस्यप्रसिद्धिः केन अवस्तुनीन्द्रिया-
द्यसम्बन्धेन न केनापिप्रत्यक्षादिप्रमाणेन त-

त्रसिद्धिरितिभावः किंच सामान्याभावरूप-कारणस्य सर्वत्रसत्त्वात् सकलम् सर्वं कायम् सर्वतः सर्वत्र किमिति न स्यात् किंचाभावस्य सुलभत्वात् अयत्नम् यत्नं विनैव सर्वेषाम् अ-भीष्टम् स्यात् तस्मात् हे जड़ आत्मघाते स्व-नरकहेत्वसदुपदेशे भवान् किमिति कथम् प्रवृत्तः ॥ २६ ॥

सदैकस्वाभावादर्शनेन सर्वे पदार्थाः सप्त स्वभावाः स्यादस्ति १ स्यान्नास्ति २ स्याद-स्ति च नास्ति च ३ स्यादवक्तव्यः ४ स्या-दस्ति चावक्तव्यश्च ५ स्यान्नास्ति चावक्त-व्यश्च ६ स्यादस्ति च नास्ति चावक्तव्यश्चे-ति स्यादिति कथं चिदर्थकः इत्यादि च दि-गम्बरमतं खण्डयति, नैक इति—

**नैकोर्थः सप्तधा स्याद्भवति यदि भवेत्साप्तविध्यं च तद्व-ज्जीवा जीवादयोर्थाः किमिति**

T

च न तथास्याज्जगच्चाव्यवस्थ-
म् । संदेहः स्याद्विरोधादवधू-
तिरथ ते बन्धमोक्षाव्यवस्था
सर्वानैकान्त्यवादो गतवसन
ततो भाति मत्तप्रलापः ॥२७॥

एकोर्थः घटाद्येकपदार्थः सप्तधा न स्यात् विरुद्धधर्माणां कथञ्चिदेकत्र समावेशोपि धर्म्यभेदादिति भावः यदि सर्ववस्त्वनैकान्तम् भवति तर्हि साप्तविध्यं च सप्तविधत्वमपि तद्वत् भवेत् घटादिवदनैकान्तं भवेत् तथा च भग्नस्ते नियमः च पुनः जीवाऽजीवादयः अर्थाः तथासप्तविधाः किमिति न भवेयुः इष्टापत्तौ तु जगत् चात् शास्त्रम् अव्यवस्थम् स्यात् अयं जीवोयमजीवः इदमिष्टसाधनमिदमनिष्टसाधनमिति नियमस्य सप्तभङ्गीन्यायेन भङ्गात् किंच ते तव अवधू-

तिः स्वशास्त्रीयनिश्चयः सन्देहः स्यात् सन्देहरूप एव स्यात् कस्मात् विरोधात् निश्चयेपि सप्तप्रकारन्यायावतारेण विरुद्धसप्तकोट्यवगाहित्वान्निश्चयस्य अथ अनन्तरम् उक्तप्रकारेण बन्धमोक्षाऽव्यवस्था स्यात् ततः तस्मात् हे गतवसन वस्त्रहीन सर्वानैकान्त्यवादः मत्तप्रलापः भाति मत्तप्रलाप इव निरर्थकोनुपादेयो भातीति भावः ॥ २७ ॥

हैरण्यगर्भमतं खण्डयति, एवमिति—

एवं हैरण्यगर्भाद्युदितमपि
जगत्कारणं नादरार्हं यस्मा-
त्कस्य प्रसूतिः श्रुतिभिरधि-
गता क्लृप्तमायुर्मितं च । अस्य
ज्ञानादियोगं गमयति च यतो
ब्रह्मतो ब्रह्मवाणी तस्माद्ब्रह्मैव

T

मायाशवलितमुचितं श्रौतमेकं निदानम् ॥ २८ ॥

एवम् नैयायिकाद्यभिमतकेवलनिमित्तकारणवत् हिरण्यगर्भोपासकादिकथितमपि जगत्कारणं हिरण्यगर्भादि आदरार्हम् आदरयोग्यं न कस्मात् यस्मात् श्रुतिभिः कस्य ब्रह्मणः प्रसूतिः उत्पत्तिः अधिगता निश्चिता तथा पुराणादौ मितम् द्विपरार्द्धसंमितम् आयुश्च क्लृप्तम् निरूपितम् हिरण्यगर्भोपि कार्यमेवेति भावः च पुनः यतः यस्मात् ब्रह्मवाणी वेदः अस्य कार्यब्रह्मणः ज्ञानादियोगम् ज्ञानशक्त्यादेः सम्बन्धम् प्राप्तिम् ब्रह्मतः ईश्वरात् गमयति वोधयति तस्मात् श्रौतम् श्रुत्येकगम्यम् एकम् अद्वितीयम् ब्रह्मैव मायाशवलितम् अध्यस्तमायायोगिनिदानम् जगदादिकारणम् उचितम् ॥ २८ ॥

T

अथ देहात्मवादिमतं खण्डयन्ति, कश्चिदित्यादिचतुर्भिः—

कश्चिद्दुःखी स्वजन्मप्रभृति सुखयुतश्चापरः कस्य हेतोः कस्मादाद्या प्रवृत्तिस्तनुरपि च कुतः किं न वेत्ति प्रमीतः। स्वाभाव्यं हेतु साम्ये सममिति विदितं दीपबीजाङ्कुरादौ वैषम्यं कर्मजन्यं यदि गदसि जनेः पूर्वमध्यात्मसिद्धिः ॥२६॥

स्वजन्मप्रभृति स्वजन्मकालादारभ्य कश्चिद्दुःखी अपरश्च अन्यश्च सुखयुतः सुखी कस्य कस्मात् हेतोः तथा आद्या प्रथमा स्तन्यपानादौ प्रवृत्तिः कस्मात् हेतोः च पुनः

T

तनुरपि शरीरमपि कुतः कस्माद्धेतोः तथा प्रमीतः मृतः किं न वेत्ति कथं न जानाति शरीरात्मात्वस्त्येव स्वभाव एव विचित्रदुःखादिहेतुरिति चेत् हेतुसाम्ये कारणसमत्वे स्वाभाव्यम् स्वभावभावः निजधर्मवत्त्वम् समम् भवति इति दीपबीजाङ्कुरादौ विदितम् प्रसिद्धम् तैलादिहेतुसाम्ये सर्वदीपानां प्रकाशनत्वादि स्वाभाव्यं समम् तथा बीजादिहेतुसाम्ये व्यक्तिविशेषत्वादि बीजाङ्कुराणाम् हेतुवैषम्ये तु स्वाभाव्यवैषम्यम् तथा च न वैचित्र्ये हेतुःस्वभाव इति भावः यदि वैषम्यम् सुखदुःखादिवैचित्र्यम् कर्मजन्यम् गदसि वदसि त्वम् तर्हि जनेः शरीरोत्पत्तेः पूर्वमपि आत्मसिद्धिः शरीरोत्पत्तिसमये तादृशकर्मणामसंभवेन स्वादृष्टरूपप्राचीनकर्मकर्तृशरीरातिरिक्तनित्यात्मसिद्धिर्बलात्सिद्धेति भावः ॥ २९ ॥

मानं प्रत्यक्षमेकं यदि कथय कथं भाषितं ते प्रमाणं सम्भाव्यार्थं सदोषं यदि तदपि बली किं न वेदो विदोषः । न ह्यध्यक्षं विनाक्षैर्न च तव सुगमा मानताध्यक्षमात्रे ज्ञानं नान्यस्य बोद्धुं प्रभवति च भवांस्तेन मिथ्याप्रलापी ॥३०॥

आत्मादिनिश्चये यदि त्वन्मते प्रत्यक्षम् एकम् मानम् प्रत्यक्षरूपमेकमेव प्रमाणम् तर्हि ते तव भाषितम् वचनम् कथम् प्रमाणम् इति त्वम् कथय प्रत्यक्षातिरिक्तं हि वाक्यम् स्यादेतत् सदोषम् भ्रमप्रमादादिदोषवत्पुरुषजन्यत्वदोषसहितम् तद-

T

पि त्वद्भाषितमपि यदि सम्भाव्यार्थम् नि-
श्चितार्थकम् प्रमाणमिति यावत् तर्हि वि-
दोषः अपौरुषेयत्वेनोक्तदोषशून्यः वेदः किम्
बली न प्रमाणं न किन्तु प्रमाणमेव किञ्च
अनुमानमानमवश्यमङ्गीकार्यम् हि यतः अक्षैः
इन्द्रियैः विना अध्यक्षम् प्रत्यक्षम् न सि-
ध्यति इन्द्रियाणित्वनुमेयान्येवेति भावः तत्
अध्यक्षमात्रे प्रत्यक्षे एव मानता प्रामा-
ण्यम् तव न सुगमा नैव सुलभा किञ्च केव-
लप्रत्यक्षवादी भवान् अन्यस्य पुरुषस्य
ज्ञानम् ज्ञानेच्छादि बोद्धुम् ज्ञातुम् न च प्र-
भवति नैव समर्थोभवति परेच्छादीनां चेष्टा-
दिनानुमेयत्वात् तेन उक्तसर्वहेतुना भवान्
मिथ्याप्रलापी मिथ्यावदनशीलः ॥ ३० ॥

गौरः स्थूलो युवाहं पटुरि-
ति च तनावात्मबुद्धिर्जनानां

स्वाभाव्यादेवसिद्धेत्यधिगम-
यदिदं निष्फलं दर्शनं ते। वेद-
द्वेषात्प्रवृत्तं यदि वत नतरां द्वे-
षमूलं प्रमाणं दैवान्नष्टस्त्वमे-
कः किमिति शठ परान् हन्त
हन्तुं प्रवृत्तः ॥३१॥

किञ्च जनानाम् प्राणिनाम् गौरः स्थूलः युवा च पुनः पटुः कुशलः अहम् इति इत्याकारा तनौ शरीरे आत्मबुद्धिः स्वाभाव्यात् स्वभावात् एव सिद्धा इति अस्मात् हेतोः इदम् स्वभावसिद्धदेहात्मत्वम् अधिगमयत् बोधयत् ते तव दर्शनम् शास्त्रम् निष्फलम् त्वद्दर्शनम् यदि वेदद्वेषात्प्रवृत्तम् तर्हि वतेति खेदे द्वेषमूलम् अतः प्रमाणम् नतराम् कथमपि प्रमाणं न स्यात् तस्मात् हे शठ व-

T

श्चक दैवात् अशुभ प्रारब्धात् एकः त्वम् नष्टः विपरीतबुद्धिर्जातः परन्तु हन्तेति खेदे परान् अन्यान् हन्तुम् शास्त्ररचनया वेदविरुद्धमतीन् कर्तुम् किमिति किमर्थम् प्रवृत्तः॥३१॥

रेतोरक्तप्रसूतं जडमशनचितं षड्विकारं त्वगस्थिस्नायुक्व्यान्त्रमज्जारुधिरमयमतिस्वल्पमाध्यामयाढ्यम् । प्राणायामे मृदादिप्रतिममपि च विट्कीटभस्मावशेषं देहं तं मूढ कस्मादहमिति मनुषे केन वा वञ्चितोसि ॥ ३२ ॥

हे मूढ तम् तुच्छत्वेन प्रसिद्धम् देहम् कस्मात् हेतोः अहम् इति त्वम् मनुषे आत्म-

त्वेनाङ्गीकरोषि न तु ग्लानिमिति भावः अवश्यं मूढत्वात् केन वा केनापि वञ्चितः त्वम् असि देहम् कीदृशं रेतोरक्तप्रसूतम् पित्रोर्धातुभ्यामुत्पन्नम् जड़म् अशनेन अन्नादिभक्षणेन चितम् वृद्धम् षड्विकारम् जायते स्तीत्यादिषड्विकारयुतम् त्वक् चर्म अस्थि स्नायु नाड़ी क्रव्य मांस अन्त्रमालाकारमलाद्याशयविशेषःमज्जा अस्थ्यन्तःसंसक्तरसरुधिरमयम् एतत्प्रचुरम् अतिस्वल्पम् आध्याऽऽमयाढ्यम् मानसशारीरदुःखयुतम् प्राणापाये प्राणवियोगे मृदादिप्रतिमम् मृत्पिण्डादितुल्यम् अपि च किञ्च विट् कीटभस्मावशेषम् मृत्य्वनन्तरं भक्षणबहुकालस्थितिदाहैर्मलकृमि भस्मरूपेणावशिष्यमाणम् परिणतम् ॥३२॥

इन्द्रियात्मवादिमतं खण्डयति, खानामिति—

**खानामात्मत्ववादे प्रतिनियतगतौ स्वामिनानात्वदोषा-**

देहोन्माथप्रसङ्गः समुदितवि-षये त्वन्धमूकाम्रियेरन् । उ-क्तिर्दृष्टश्रुतानामपि च न घटते नापि संघो निरूप्यः स्वप्नद्रष्टैव नस्याच्छयनमरणयोर्निर्विशे-षाद्भयं स्यात् ॥ ३३ ॥

खानाम् इन्द्रियाणाम् आत्मत्ववादे आ-त्मत्वोक्तौ देहोन्माथप्रसङ्गः स्यात् कस्मात् प्रतिनियतगतौ प्रतीन्द्रियम् आत्मत्वस्य नि-श्चितप्राप्तिर्यत्र तत्र पक्षे स्वामिनानात्वदो-षात् बहुस्वामिभिः स्वस्वकार्यायभिन्नदेशे-ष्वाकृष्ट उन्मथ्यत एवैको लोके समुदितवि-षये तु समुदायं प्राप्तानीन्द्रियाणि यत्र तत्र पक्षे तु अन्धमूका म्रियेरन् समुदायघटक-किञ्चिद्विनाशे तादृशसमुदायरूपात्मनो वि-

नाशादन्धादीनां मरणप्रसङ्गो दुर्वारः अपि च किंच दृष्टश्रुतानाम् पदार्थानाम् उक्तिः कथनम् लोके विदितम् न घटते नह्यन्यदृष्टोन्यश्रुतोवार्थो दर्शनश्रवणसामर्थ्यहीनोन्येनोच्यते सङ्घोपि उक्तेन्द्रियसमुदायोपि न निरूप्यः सङ्घिभिर्भिन्नः सङ्घो नवेति न निरूपणीयः तथास्वप्ने स्वप्नद्रष्टा नैव स्यात् खानामभावेनात्माभावात्स्वप्नबोधो न स्यादिति भावः तथा मरणे इव शयनेपि भयं स्यात् कस्मात् शयनमरणयोर्निर्विशेषात् उभयत्रेन्द्रियलयसाम्यात् ॥ ३३ ॥

प्राणात्मत्वं खण्डयति, प्राण इति—

**प्राणो नात्मा जडत्वादशनसिततया वृत्तिलाभात्सुषुप्तावेतस्मिन्संचरत्यप्यहमचल इति प्रत्ययादस्मयत्वात्। स्व-**

T

ष्टा स्वोत्क्रान्तयेस्या मरणमपि धृतेर्जीवशंकाभिधेयस्तस्मादन्योस्ति रक्षन्स्वनिलयममुना दीप्तिमानेकहंसः ॥३४॥

प्राणः आत्मा न कस्मात् जड़त्वात् जड़त्वं तु प्राणस्य अशनसिततया अन्नभक्षणेन बद्धतया प्राणस्थितेरन्नाधीनत्वात् तथा अम्मयत्वात् आपोमयः प्राण इति जलाधीनत्वात् पुनः कस्मात् सुषुप्तौ वृत्तिलाभात् अधिकप्रवृत्त्युपलम्भात्प्राणस्य आत्मनश्च तदा परमात्मनिलयश्रवणादिति भावः पुनः एतस्मिन् प्राणे संचरत्यपि अहम् अचलः स्थिरः इति प्रत्ययात् प्रतीतेः किंच आत्मा तस्मात् प्राणात् अन्यः अस्ति कीदृशः स्वोत्क्रान्तये शरीरात् स्वस्य निर्गमाय अस्य प्राणस्य स्रष्टा उत्पादकः पुनः आमरणम् मरणपर्यन्तम्

अस्य धृतेः धारणात् जीवशब्दाभिधेयः जीवशब्दवाच्यः पुनः स्वनिलयम् स्वालयं शरीरम् अमुना प्राणेन रक्षन् पालयन् हेतुरिदं विशेषणत्रयम् कर्म्मकरणप्राणात् कर्त्रात्मनो भेदे पुनः दीप्तिमान् स्वप्रकाशवान् पुनः एकहंसः एकस्सन्नवस्थात्रये संचरति ॥३४॥

मनस आत्मत्वं निराकरोति, उद्भूतेरिति–

उद्भूतेः साधनत्वादशनमयतया शुद्ध्यशुद्धिप्रतीतेर्हेतुत्वाद्बन्धमुक्त्योस्तदनुतनुभृते स्तन्मयत्वश्रुतेश्च। जाग्रत्स्वप्नप्रशान्तौ करणगणलये तत्प्रशान्तेः सुषुप्तेरुत्थाने सुप्तिसौख्यस्मृतिभिरपि मितं मानसं चापि नात्मा ॥ ३५ ॥

T

च पुनः मानसमपि मनोपि आत्मान इति मितम् निश्चितम् कुतः उद्भूतेः उत्पत्तेःसाधनत्वात् श्रवणादौ करणत्वात् अशनमयतया अन्नविकारत्वात् शुद्ध्यशुद्धिप्रतीतेः मनस्तुद्विविधं प्रतीयते नात्मातथा बन्धमुक्त्योर्हेतुत्वात् तदनु तनुभृतेः मनोनुशरीरग्रहणात् जीवस्य मनो यत्तनुं गृह्णाति जीवोथतां गच्छतीति भावः च पुनः तन्मयत्वश्रुतेः तादात्म्याध्यासेनात्मनः मनोमयत्वश्रवणात् जाग्रत्स्वप्नप्रशान्तौ सुषुप्तौ करणलये सति तत्प्रशान्तेः मनसो लयात् सुषुप्तेः सकाशात् उत्थाने जागरे सुप्तिसौख्यस्मृतिभिरपि सुषुप्तितत्रत्यसुखयोः स्मरणाच्च मनस आत्मत्वे तत्र तल्लयेन तदानुभवितुरभावात्स्मृत्यनुपपत्तिरिति भावः मनसीवात्मनि तृप्त्याद्यष्टकं न सम्भवतीति शास्त्रादिभिर्ज्ञेयमिति च ॥ ३५ ॥

स्थिरविज्ञानमात्मेति कस्यचिन्मतन्नि-
राकरोति, विज्ञानमिति—

विज्ञानं स्थायि यत्तत्सम-
मिह मनसा किञ्च नानात्म-
तास्यात्तस्यानेकात्मकत्वात्तद्-
भिमातिवशादात्मबन्धश्रुतेश्च ।
सारथ्यं तस्य क्लृप्तं यदपि तनु-
रथे स्वात्मनो भोगमुक्त्योस्त-
स्मादन्योऽस्य साक्षी तदुपहि-
ततनुश्चिन्मयोऽस्त्यन्तरात्मा ॥

इह शरीरे स्थायि नित्यम् यद्विज्ञानम् बु-
द्ध्यपरपर्यायम् तत् मनसा समम् उत्पत्त्यादि-
मत्त्वेन तुल्यम् किञ्च तद्यद्यात्मा स्यात्तर्हि
नानात्मता स्यात् कुतः तस्य विज्ञानस्य

T

अनेकात्मकत्वात् सावयवत्वात् अवयवावयविनोस्तादात्म्येन नानावयवरूपात्मानः स्युरिति भावः तदभिमतिवशात् आत्मबन्धश्रुतेश्च विज्ञाने तादात्म्याध्यासहेतोः आत्मनो बन्धश्रवणाच्च बुद्धेरन्य एवात्मेति भावः स्वात्मनः भोगमुक्त्योः भोगमुक्तिनिमित्तम् तनुरथे शरीररथे तस्य विज्ञानस्य यदपि सारथ्यम् सारथित्वम् क्लृप्तम् कल्पितम् श्रुतौ तदपि बुद्ध्यात्मनोर्भेदे हेतुरित्यर्थः तस्मात् हेतोः अस्य विज्ञानस्य साक्षी ज्ञाता तदुपहिततनुः विज्ञानेनैकीभूतस्वरूपः वस्तुतः चिन्मयः चिद्रूपः अन्तः सर्वान्तः अधिष्ठानभूतः विज्ञानादेः अन्यः आत्मा अस्ति ॥३६॥

सकलशरीरव्यापिज्ञानगुणकोणुप्रमाण
आत्मेति पाञ्चरात्रादिमतं
खण्डयति, अण्वात्मेति—

**अणवात्मा चित्स्वरूपो यदि**

सकलतनौ शैत्यबोधो न ते स्यान्नावैधर्म्येस्यबोधः सकलतनुगतग्राहकोन्यो गुणश्च । वैधर्म्येणोर्गुणश्चित् कथमखिलतनुम् व्याप्नुयाद्राणवं वा सिद्धं केनात्मनस्ते श्रुतिभिरिति नयत्तास्तदानन्त्यनिष्ठां ॥३७॥

यदिचित्स्वरूपः अण्वात्मा अणुपरिमाण आत्मा तर्हि ते तव मते सकलतनौ आत्मसंबद्धाणुरूपशरीरावयवातिरिक्तसर्वदेहे शैत्यबोधो न स्यात् व्यापिज्ञानगुणवानात्मेति नोक्तदोष इति चेत् वैधर्म्ये एव गुणगुणिभावदृष्टेः आत्मापि चित्गुणो ज्ञानं चेति अवैधर्म्यें वैधर्म्याभावे सकलतनुगतग्राहकः सर्वदेहगतशैत्यादिग्रहणकर्ता अस्य आत्मनः

वोधो गुणश्च ज्ञानाख्यगुणोपि अन्यो न स्यात् चित्त्वाविशेषादात्मातिरिक्तो न भवेत् वैधर्म्ये आत्मज्ञानयोर्वैधर्म्ये तु अणोः जडात्मकाण्वात्मनः चित् चिद्रूपः गुणः ज्ञानम् अखिलतनुं कथं व्याप्नुयात् गुणगुणिनोः समानदेशत्वनियमादिति भावः वा किंवा आत्मनः आणवम् अणुपरिमाणम् ते तव केन प्रमाणेन सिद्धम् वालाग्रशतभागस्येत्यादि श्रुतिभिरिति न वाच्यम् यत् यस्मात् ताः श्रुतयः तदानन्त्यनिष्ठाः आत्मनो परिच्छिन्नत्वेतात्पर्यवत्यः विरुद्धानेकात्मपरिमाणश्रुतयस्तूपाध्यालम्बाः ॥ ३७ ॥

भाट्टमतं दूषयति, नैक इति—

**नैकः स्याच्चिज्जडात्मा कथमथ विषयः स स्वयं स्वस्य कौ तावंशौ योगस्तथात्मा कि-**

मिति च जड़ता केन वा चेतनस्य। कर्तृत्वं तस्य कीदृक् करणसमुदयं सैष धत्ते कथं वा तत्त्वं जीवस्य देवप्रियपशुभिरिदं कर्मठैर्दुर्निरूपम् ॥३८॥

आत्मा एकः सन् चिज्जड़ात्मा न स्यात् विरुद्धोभयरूपो न स्यात् अथ उभयरूपत्वोक्त्यनन्तरम् जड़श्च चितो विषय इति स आत्मा स्वस्य विषयः स्वयं कथं स्यात् अंशयोरंशिनाऽभेदेपि परस्परं भिन्नयोर्विषयविषयिभावो न विरुद्ध इति चेत् तौ चिदचिद्रूपौ अंशौ कौ किमात्मकौ तयोः योगः सम्बन्धश्च कः अवयवत्वं सम्बन्धो वा न निरूपयितुं शक्यते चितीभावः तथा आत्मा कः अंशाभ्यां भिन्नाभिन्नत्वादिना न निरूप्यः सोपि च पुनः चेतनस्य जड़ता किमि-

T

ति किमर्थं स्वीक्रियते केन वा कारणेन जायते असङ्गे कारणसम्बन्धस्त्ववाच्य एव कर्तृत्वाद्युपपत्त्यर्थं साङ्गीक्रियते चेत् तस्य आत्मनः कर्तृत्वम् कीदृक् वास्तवं तु न निष्क्रियत्वश्रुतेः चक्षुषा पश्यामीति कर्तृत्वासिद्धिरित्यपि न सः निष्क्रियत्वेन श्रुतौ प्रसिद्धः एषः आत्मा करणसमुदयम् करणसमूहम् वा कथम् धत्ते न कथमपीति तस्मात् देवप्रियपशुभिः देवपूजकत्वेन देवानां प्रियैः अविवेकित्वेन पशुतुल्यैः कर्मठैः क्रियासुघटमानैः मीमांसकैः इदम् जीवस्य तत्त्वम् वास्तवस्वरूपम् दुर्निरूपम् निरूपयितुमशक्यम् ॥

कणादगौतममतं निरस्यति,
जीवानामित्यादित्रिभिः—

**जीवानां वैभवं चेत्तनुकृतिकरणादृष्टसाधारणत्वान्नस्या-**

भोगव्यवस्था व्यतिकरमयते ये-
न सर्वैर्मनोपि । नानात्म्यं चा-
प्रमाणं गदसि यदि तनूपाधि-
भिस्त्वं व्यवस्थां सिद्धेऽसिद्धे-
पि भेदे यत इह विफलाः क-
ल्पनीया विशेषाः ॥ ३९ ॥

जीवानाम् वैभवम् विभुत्वम् सर्वगतत्वं चेत् यदि तर्हि सर्वशरीरेषु सर्वात्मसत्तामम-तयोरनिवार्यत्वेन भोगव्यवस्था न स्यात् एष भोगोस्यैवेति किन्तुसर्वभोगास्सर्वेषां स्युः कस्मात् तनुकृतिकरणादृष्टसाधारणत्वा-त् शरीरप्रयत्नेन्द्रियप्रारब्धानाम् एतस्यैवा-त्मन इत्यत्र हेत्वसत्त्वेन सर्वात्मसु तुल्यत्वा-त् यन्मनसा यस्यात्मनस्संयोगस्तन्मनसा तस्यैव भोगो नैवमपि व्यवस्था येन हेतुना

T

मनोपि मूर्तत्वात् सर्वैः आत्मभिः व्यतिकरम् सांकर्यम् संयोगम् अयते प्राप्नोति यदि तनूपाधिभिः देहरूपोपाधिहेतुना व्यवस्थाम् त्वम् गदसि तत्तदात्मन्युत्पन्नभोगे कश्चिद्विशेषो भवतीति तत्तद्भोगविशेषे तत्तद्देहहेतुतेति तर्हि नानात्म्यं च आत्मनानात्वमेव अप्रमाणं स्यात् एकात्मवादेपीत्थं व्यवस्थोपपत्तौ नानात्मस्वीकारो व्यर्थ इति भावः विशेष आत्मभेदे हेतुरिति चेत् एकविशेषस्य सर्वभेदकत्वे वियत्यपि भेदापत्तिः बहूनां तत्त्वे विशेषाश्रयाणां भेदा बिनैव विशेषान्पूर्वतः सिद्धाः इत्थम् यतः यस्मात् इह आत्मनि भेदे सिद्धे असिद्धे अपि वा कल्पनीया विशेषाः विफला विशेषपदार्थस्वीकार एव व्यर्थः ॥ ३९ ॥

किञ्चात्मन्यनवयवेन सम्प्रयोगः सम्भाव्यो निरवयवस्य

मानसस्य । न द्रव्यं निरवयवं न शाश्वतं वा तद्धर्मो न च धिषणा यतो जड़ा स्यात् ॥४०॥

किञ्च अनवयवे आत्मनि निरवयवस्य मानसस्य मनसः संप्रयोगः संयोगः आत्मनि बुद्ध्यादिगुणोत्पत्तये तार्किकाभिमतः न संभाव्यः हेतवस्त्वणुकारणखण्डनोक्ताः तथा द्रव्यम् निरवयवम् न संभाव्यम् शाश्वतं वा नित्यमपि न संभाव्यम् च पुनः धिषणा चैतन्यम् ज्ञानमिति यावत् तद्धर्मः द्रव्यधर्मः न यतः यस्मात् जड़धर्मत्वे धिषणापि जड़ा स्यात् विरुद्धस्वभावयोर्धर्मधर्मिभावादर्शनात् तथाच चेतनज्ञानगुणत्वादात्माद्रव्यमतो जड़ इति वाग्विलासमात्रमिति भावः ॥४०॥

अज्ञानं स्वमथ सुखं सुषुप्तबु-

द्धं बुद्धस्त्वं स्मरसि कथं स्वतो जड़ात्मा । विज्ञानान्ययमय-मित्यनेकसङ्ख्यान्यद्राक्षं चि-रमिति केन वेत्स्यसाक्षी ॥४१॥

किञ्च हे तार्किक स्वतः स्वरूपतः जड़ात्मा जड़रूपः त्वम् सुषुप्तबुद्धम् सुषुप्तौ जड़त्वा-त् अननुभूतम् अज्ञानम् स्वम् आत्मानम् अ-थ तत्कालीनम् सुखम् बुद्धः सुषुप्तेः प्रतिबुद्धः सन् कथम् स्मरसि सुखमहमस्वाप्सं न किं-चिदवेदिषमिति तथा असाक्षी जड़त्वादि-न्द्रियादि विना द्रष्टुमशक्तस्त्वम् घटोयं घ-टोयम् इति इत्याकाराणि अनेकसंख्यानि धारात्मकबहूनि विज्ञानानि केन विज्ञानेन वेत्सि जानासि येन चिरम् बहुकालम् अमुं घटम् अहम् अद्राक्षम् इति वदसि क्रमेणो-त्पन्नविनष्टविज्ञानानां समुदायासम्भवेन त-

T

द्विषयकज्ञानान्तरासम्भव एव तस्मात् सौषुप्तज्ञानधारादिसाक्षितया नित्यचिद्रूप आत्मावश्यमभ्युपेय इति भावः ॥ ४१ ॥

एवं द्वैतमतानि निरस्य श्रुतितात्पर्यवदद्वैतमात्मस्वरूपं बोधयति, इच्छादेरित्यादिना—

इच्छादेरुदयविनाशसन्ततीनामक्षाणामसुमनसां धियश्च तस्मात् । द्रष्टान्योस्त्यविपरिलुप्तदृक् सतत्वो निःसङ्गो विहरति यः पुरत्रयेपि ॥ ४२ ॥

तस्मात् जड़ानामनात्मत्वात् तेभ्यः अन्यः द्रष्टा साक्षी आत्मा अस्ति केषां द्रष्टा इच्छादेः उदयविनाशसन्ततीनाम् इच्छाक्रोधलोभादेः उत्पत्तिविनाशधाराणाम् अक्षाणाम्

इन्द्रियाणाम् असुमनसाम् प्राणानाम् मनसाम् च पुनः धियः बुद्धेः कीदृशः अविपारिलुप्तदृक्सतत्वः अविनाशिज्ञानस्वरूपः पुनः यः आत्मा पुरत्रये शरीरत्रये अवस्थात्रये इति यावत् निःसङ्गः साक्षी सन् विहरति ॥ ४२ ॥

श्रुतिषु द्रष्टाश्रोत्रादिप्रयोगाज्ज्ञानवान्नात्मा जड़ः किन्तु स्वयं प्रकाशज्ञानमेवेति दर्शयति, संशान्ते इति—

**संशान्ते रविशशिवह्निवाक्-प्रकाशे निर्वाणे करणगणे निरस्तसङ्गः । स्वज्योतिः प्रकटितवासनामयार्थश्चिद्धातुः श्रुतिभिरुदीरितोन्तरात्मा ॥४३॥**

रविशशिवह्निवाक्प्रकाशे सूर्य्यचन्द्राग्निगिरां प्रकाशे संशान्ते सम्यक्निवृत्ते सति कर-

णगणे इन्द्रियसङ्घे निर्वाणे शान्ते लीने ऐन्द्रियप्रकाशाभावे च सति स्वप्ने इतिभावः श्रुतिभिः अन्तरात्मा उदीरितः कथितः कीदृशः निरस्तसंगः सुप्तशरीरेन्द्रियतादात्म्यशून्यः स्वज्योतिः स्वयंप्रकाशः स्वप्ने प्रकाशान्तरानपेक्षः स्वरूपप्रकाशेनैव सर्वव्यवहारवान्भवतीति भावः पुनः तदा प्रकटितवासनामयार्थः ऐन्द्रजालिकवत् अभिव्यक्तीकृतमनः परिणामरूपमिथ्यादेहेन्द्रियविषयार्थः पुनः चिद्धातुः चिद्रूपधातुः नतु द्रव्यादिरूपधात्वन्तरम् ॥ ४३ ॥

जागरे विविच्यात्मानं दर्शयति, बाह्येति–

**बाह्यार्थान्करणगणेन तं च बुध्द्या बुद्धिं यः प्रथयति सन्ततं स्वभासा । आत्मा सावनधि-**

**गतः पराग्भिरेभिर्विज्ञेयस्तनु-भवनान्तरप्रदीपः ॥ ४४ ॥**

असौ आत्मा विज्ञेयः असौ कः यः करणगणेन इन्द्रियसमूहेन बाह्यार्थान् वहिर्भवविषयान् प्रथयति प्रकाशयति च पुनः तम् करणगणम् बुद्ध्या अन्तःकरणेन प्रथयाति बुद्धिम् स्वभासस्वरूपचैतन्येन सन्ततम् निरन्तरम् प्रथयति पुनः पराग्भिः स्वाधिष्ठानचैतन्यात् परमन्यविषयं गच्छद्भिः एभिः बाह्याभ्यन्तरेन्द्रियैः अनधिगतः न गृहीतः अत्र पराग्भिरिति हेतुः पुनः तनुभवनान्तरप्रदीपः शरीरगृहमध्यस्थदीपः साक्षीति यावत् ॥ ४४ ॥

चिद्रूपत्वमुक्त्वानन्दरूपत्वमाह, प्रेयानिति—

**प्रेयान्यः सदनधनात्मजप्रियादेर्यत्प्रेम्णा प्रियमिति म-**

T

न्यते पराचः। पारार्थ्यावधि-
रवधीरितैतरार्थ्यो विज्ञेयः स
खलु सुखाब्धिरन्तरात्मा ॥४५॥

सः अन्तरात्मा अहमहमिति सदाप्रसिद्धः
सर्वाभ्यन्तरः सर्वाधिष्ठानम् आत्मा खलु नि-
श्चयेन सुखाब्धिः सुखसमुद्रः अपरिच्छिन्न-
सुखरूपः विज्ञेयः अथात्र हेतवः सोन्तरा-
त्मा कीदृशः कः यः सदनधनात्मजप्रिया-
देः प्रेयान् गृहधनपुत्रभार्यादेरपि अतिशयेन
प्रियः यतस्तैरात्मानं रक्षति पुनः यत्प्रेम्णा
आत्मप्रीतिहेतुना पराचः आत्मान्यत्वं प्रा-
प्तान् पदार्थान्देहादीन् प्रियम् इति मन्यते
प्रियत्वेन जानाति स्वप्रतिकूलेषु द्वेषदर्श-
नादखिलेष्विति भावः पुनः पारार्थ्यावधिः किं-
चित्कस्याप्यर्थं किंचित्कस्याप्यर्थमिति सर्वं
वस्तु परार्थत्वाक्रान्तम् आत्मार्थं तु सर्वमि-

T

ष्यते इति परार्थत्वस्यावधिरात्मा अतः अवधीरितैतरार्थ्यः निरस्तपरार्थत्वः आत्मा न कस्याप्यर्थे इति यावत् ॥ ४५ ॥

असङ्गचिदानन्दस्य कर्तृत्वाद्यध्यासत इत्याह, शुद्ध इति—

**शुद्धोसावहमिदमित्युपाधिधर्मानध्यासादभिमनुते परस्परेण। वृध्यादीनिव सलिलप्रभेदधर्मान्ब्रध्नेम्बुप्रतिफलिते मृषैव मोहात् ॥ ४६ ॥**

शुद्धः असौ आत्मा उपाधिधर्मान् देहेन्द्रियान्तःकरणानाम्, कर्तृत्वादिधर्मान् मृषैव स्वस्मिन् अभिमनुते अङ्गीकरोति कस्मात् मोहात् अज्ञानात् अविवेकात् स्वस्योपाधेश्च

पररूपरेण अन्योन्यतादात्म्येन अध्यासात् आरोपात् कान् क्केव सलिलप्रभेदधर्मान् वृद्ध्यादीन् दीर्घह्रस्वशुद्धास्थिरादिजलभेदानां धर्मान् वृद्धिह्रासस्वच्छत्वचञ्चलत्वादीन् अम्बुप्रतिफलिते जले प्रतिबिम्बिते ब्रध्ने सूर्ये इव ॥ ४६ ॥

अध्यासहेत्वज्ञानं साधयति, अज्ञ इति—

अज्ञोस्मीत्यनुभवनादनाद्य-
बोधश्चिन्निष्ठश्चिति विषयस्त-
मो यथेन्दुम् । प्रच्छाद्य स्फुरति
चितं चितैव भूयो विक्षिप्य भ्र-
मयति हन्तदुर्निरूपः ॥४७॥

अहम् अज्ञः अस्मि इत्यनुभवनात् इत्यनुभवप्रमाणात् सिद्धः चिन्निष्ठः शुद्धचैतन्ये स्थितः चिति विषयः शुद्धचिद्ग्राहकः अ-

नाद्यबोधः अजन्माज्ञानम् चितम् चैतन्यम् प्रच्छाद्य आवृत्य चितैव तेनैवचिता स्फुरति प्रसिध्यति कथम् यथा तमः राहुः इन्दुम् चन्द्रम् प्रच्छाद्य इन्दुनैव स्फुरति तमोरूपो जनैर्दृश्यते भूयः आवरणानन्तरम् पुनः विक्षिप्य मिथ्यैव जगदुद्भाव्य भ्रमयति अहमिदमित्यादिभ्रान्तियुतं चेतनं करोति हन्तेति खेदे स चाबोधः दुर्निरूपः चित्यध्यस्तत्वात्स्वप्नवदनिर्वचनीयः ॥ ४७ ॥

स्वसिद्धौ स्वहेतुत्वाद्दृष्टेः सकलाध्यासहेत्वज्ञानाध्यासे हेत्वन्तरासिद्धेश्चनाज्ञानसिद्धिरित्यत आह, चिद्भाने इति—

**चिद्भाने चितिरिव याभिदेव भेदे निर्वाहे निजपरयोः स्वतः समर्था । सम्भाव्येतर-**

घटनापटीयसी सा संमोहं ज-
नयति विभ्रमेण माया ॥४८॥

चिद्भाने चितिः इव सर्वभासिका चितिः यथा चिद्रूपस्वभासे समर्था अनपेक्षितभासकान्तरा भेदे भिदा इव यथाच घटपटादौ भिन्नव्यवहारहेतुर्भिदा घटपटादिभेदे स्वस्मिन्नपि परस्परभिन्नव्यवहारे समर्था अनपेक्षितभेदान्तरा तद्वत् या माया अविद्या अज्ञानम् निजपरयोः स्वस्वकार्ययोः निर्वाहे अध्यासादिसाधने स्वतः समर्था न हेत्वन्तरसापेक्षा सा माया विभ्रमेण विलासेन सम्मोहम् जीवत्वादिमहाभ्रान्तिम् जनयति प्रकटयति सा माया कीदृशी सम्भाव्येतरस्य असम्भाव्यस्य घटनायाम् सम्भावने पटीयसी अतिसमर्था ॥ ४८ ॥

अध्यासलक्षणमध्यासभेदं च दर्शयाति, अध्यास इति—

T

अध्यासोनाधिगतवस्तुनि ह्य-
तस्मिँस्तद्बुद्धिः स्फुटमनुभू-
यते प्रतीचि । अज्ञोहं गलित-
बलो नरो दरिद्रो जीवेयुर्मम
तनयाः कथं वतेति ॥४६॥

हिः प्रसिद्धौ अनधिगतवस्तुनि सामान्यतो भासमानेपि विशेषतो न भासमाने पदार्थे अतस्मिन् आरोप्यभिन्ने तद्बुद्धिः आरोप्यबुद्धिः अध्यासः स चाध्यासः प्रतीचि प्रत्यगात्मनि अहमहमिति भासमाने साक्षिणि स्फुटम् अनुभूयते साक्षात्प्रतीयते अहम् अज्ञः अहम् गलितबलः क्षीणबलः अहम् नरः मनुष्यः अहम् दरिद्रः धनहीनः इति वतेति खेदे मम तनयाः पुत्राः कथम् जीवेयुः जीविष्यन्ति इति च अहन्ता ममताभे-

देन द्विविधोऽयमध्यासः प्रतीचि अवान्तर-
भेदास्तु बहव इति भावः ॥ ४९ ॥

आत्मन्यनात्मधर्माणामध्यासमनात्म-
न्यात्मधर्माणां तादात्म्यसंसर्गा-
ध्यासं दर्शयति, शुद्ध इति—

शुद्धो हृष्टः स्थिरोऽहं बुध
इति च तनावात्मधर्मान्युवाहं
स्थूलो गौरोऽभिरूपः पटुरिति
च निजे देहधर्मान्निममीते ।
अन्योन्याध्यस्तसत्यानृतव-
लितवपुर्लोहपिण्डप्रविष्टो वह्निः
कूटाभिघातानिव विविधभ-
वानर्थजातं प्रपन्नः ॥५०॥

तनौ शरीरे अहम् शुद्धः निर्दोषः हृष्टः

सुखी स्थिरः बुधः चेतनः इति एवम् आत्मधर्मान् शुद्धत्वादीन् मिमीते अध्यस्यति तथा निजे स्वात्मनि अहम् युवा स्थूलः गौरः अभिरूपः सुरूपः पटुः शीघ्रकारी इति एवम् देहधर्मान् युवत्वादीन् मिमीते एवं परस्परतादात्म्येन अन्योन्यस्मिन् अध्यस्ताभ्यां सत्यानृताभ्याम् वलितवपुः मिश्रितस्वरूपः जीवः विविधभवानर्थजातम् नानाविधसंसारानर्थसमूहम् प्रपन्नः प्राप्तः कः कानिव लोहपिण्डप्रविष्टः वह्निः लोहपिण्डेन तादात्म्यं प्राप्तोऽग्निः कूटाभिघातान् कूटे लोहपिण्डे लोहान्तरेण येऽभिघातास्ताड़नानि तान् इव अविवेकाद्यथा तत्र ताड़ित इव भवति वह्निस्तथा देहेऽनर्थं प्राप्त इव जीव इति भावः ॥ ५० ॥

रूपवत्यारोप्य सदृशे एवाधिष्ठानेऽध्यासदर्शनान्नात्मन्यध्याससम्भव इत्यत आह, दृष्ट इति—

दृष्टः प्रत्यक्पराचोर्विषयि-
विषययोर्भास्तमोवद्विरोधेप्य-
ध्यासोऽहं ममेति स्फुटमिति
सुधियां नास्त्यसम्भावनात्र।
स्वप्नादौ गत्यभावाद्गगनमलि-
निमाध्यासदृष्टेर्बुधानां पश्वा-
दीनां च साम्याद्व्यवहृतिरखि-
लाध्यासमूलेति सिद्धम्॥५१॥

भास्तमोवत् प्रकाशान्धकारयोरिव विरो-
धेपि विषयिविषययोः ज्ञानज्ञेययोः प्रत्य-
क्पराचोः सर्वान्तरात्मतद्बाह्याखिलपदार्थयोः
क्रमेण अहं मम इत्यध्यासः स्फुटं यथास्या-
त्तथा सर्वैः दृष्टः अनुभूतः इति हेतोः विरो-
धभानसादृश्याभानस्थलेपि अत्र उक्तेस्मि-

T

न्नध्यासे सुधियाम् विदुषाम् असंभावना नास्ति गत्यभावात् अगत्या स्वप्नादौ आदिशब्दात् स्फटिकलौहित्यस्थले विसदृशे एवात्मनि स्फटिके च स्वाप्नलौहित्याध्यासः तथा नीरूपेपि गगने मालिन्याध्यासदर्शनाच्च तथाच प्रवृत्तिनिवृत्त्यादिव्यवहारे बुधानाम् शास्त्रिणाम् पश्वादीनां च साम्यात् तुल्यत्वात् अखिला लौकिकी वैदिकी सर्वा व्यवहृतिः व्यवहारः अध्यासमूला अध्यासादेव इति सिद्धम् ॥ ५१ ॥

अध्यासकृतानर्थं वैराग्याय दर्शयति, सार्द्धद्वाभ्याम्—

धर्माद्देवत्वमेति व्रजति पुनरधः पातकैः स्थावरादीन्देहान्प्राप्य प्रणश्यन्क्वचिदपि लभते मानुषत्वं च ताभ्याम् ।

T

कर्मज्ञानोभयेन व्रजति विधिपदं मुच्यते कोपि तस्मिन् रागी प्रत्येति भूयो जनिमिति विषमं वंभ्रमीतीह लोकः ॥५२॥

लोकः जनः धर्मात् विहितानुष्ठानजपुण्यात् देवत्वम् एति देवो भवति पुनः पातकैः विहिताकरणनिषिद्धकरणजपापैः अधः नरकम् व्रजति ततः शेषपातकैः नीचान् स्थावरादीन् देहान् प्राप्य बहुशः प्रणश्यन् विनश्यन् दैवात्फलाय सहोद्यताभ्याम् ताभ्याम् निजधर्मपातकाभ्याम् क्वचिदपि कदाचिदपि मानुषत्वम् मनुष्यशरीरम् च लभते कर्मज्ञानोभयेन कर्मोपासनाभ्याम् विधिपदम् हिरण्यगर्भस्थानम् सत्यलोकम् व्रजति तस्मिन् विधिपदे कोपि विरक्तः मुच्य-

T

ते ब्रह्मणा सह मुक्तो भवति रागी भोगेच्छुः भूयः पुनः पुनः जनिम् जन्म प्रत्येति ब्रह्मलोकादागत्य प्राप्नोति इति इत्थं विषमम् वहुदुःखं यथास्यात्तथा इह संसारे लोकः जनः वंभ्रमीति पुनः पुनर्भ्रमत्येव क्षणमात्रमपि न विश्राम्यतीति भावः ॥ ५२ ॥

दुःखं स्वर्गात्प्रपाते बहुविधनरके गर्भवासेतिदुःखं निःस्वातन्त्र्याशनायग्रहगदरुदितैः शैशवे दुःखमेव । तारुण्ये ऽमर्षलोभव्यसनपरिभवोद्वेगदारिद्र्यदुःखं वार्द्धक्ये शोकमोहेन्द्रियविलयगदैर्दुःखमन्तेतिदुःखम् ॥ ५३ ॥

स्वर्गात् उपरितनलोकात् प्रपाते पतनसमये दुःखम् तत्रत्यभोगवियोगजम् ततः बहुविधनरके नरकान्यूने गर्भवासे अतिदुःखम् ततः शैशवे बाल्ये निःस्वातन्त्र्याऽशनायग्रहगदरुदितैः मशकमात्रनिवारणेपि स्वाधीनताया अभावेन भोजनेच्छया बालग्रहेण रोगेण रोदनेन दुःखमेव ततः तारुण्ये युवत्वे अमर्षलोभव्यसनपरिभवोद्वेगदारिद्र्यदुःखम् क्रोधः धने रागाधिक्यम् स्त्र्यादिष्वासक्तिः शत्र्वादिभिस्तिरस्कारः चोराद्युपद्रवे व्यग्रतां दैवाद्धनाभावे दरिद्रतैव दुःखम् ततः वार्द्धक्ये वृद्धभावेपि दुःखम् कैः शोकमोहेन्द्रियविलयगदैः इष्टवियोगादन्तर्दाहेन अविवेकेन इन्द्रियनाशेन रोगेण च ततः अन्ते मरणे तु अतिदुःखम् निपीड़नेन व्यापीक्षुरसस्येव सर्वतः प्राणानां निष्क्रमणेधिकदुःखम् ॥८३॥

इत्थं यः कर्मबद्धो भ्रमति

परवशः प्राणभृज्जन्मसङ्घैर्दुः-
खस्यान्तं न वेत्ति स्मरति न
च जनिव्रातमज्ञानयोगात् ।
तं सर्वानर्थमूलप्रशमनविधिना
स्वात्मराज्येभिषेक्तुं तात्पर्येण
प्रवृत्ताः श्रुतिशिखरगिरः सूत्र-
भाष्यादयश्च ॥ ५४ ॥

यः प्राणभृत् जीवः अज्ञानयोगात् अनाद्य-ज्ञानसम्बन्धात् कर्मवद्धः कर्मवन्धनयुतः पर-वशः शरीराधीनः सन् इत्थम् उक्तप्रकारेण जन्मसङ्घैः जन्मसमूहैः भ्रमति तथा एत-दुःखस्य अन्तम् न वेत्ति न जानाति च पुनः जनिव्रातम् अतीतजन्मसमूहम् न स्मरति अग्रिमग्रन्थप्रवृत्तिहेतुं दर्शयति उत्तरार्द्धेन श्रुतिशिखरगिरः वेदान्तवाक्यानि सूत्रभा-

ष्यादयश्च शारीरकसूत्रतद्भाष्यादिग्रन्थाश्च तम् प्राणभृतम् स्वात्मराज्ये शुद्धनिजात्मरूपपरमानन्दे अभिषेक्तुम् स्थिरीकर्तुम् तात्पर्येण प्रवृत्ताः न तु साक्षात् केन सर्वानर्थमूलप्रशमनाविधिना अज्ञाननिवर्तकशुद्धात्माकारबोधोत्पादनेन ॥ ५४ ॥

इति श्रीमत्स्वाराज्यसिद्धौ प्रथमं प्रकरणम् ।

# अथ स्वाराज्यसिद्धेर्द्वितीयं प्रकरणम् ।

सकलानर्थनिवृत्तिपूर्वकनिर्विशेषपरमानन्दे श्रुतितात्पर्यमुद्घाटयितुमध्यारोपप्रकरणानन्तरमपवादप्रकरणं चिकीर्षुः प्रकरणद्वयतात्पर्यस्य निर्विशेषविषयत्वेपि भ्रान्तबोधनाय प्रवृत्तस्तद्दृष्टिसिद्धपदार्थतत्संबन्धादिभेदमादाय लक्ष्यलक्षणभावं प्रकरणद्वयासिद्धपदार्थयोरादौ दर्शयति हेतुत्वमिति ॥

हेतुत्वं लक्षणं यद्गदितमिदमुपादानकर्तृत्वरूपं ताटस्थ्यादास्पदं स्वं गमयति परमं ब्रह्म शाखेव चन्द्रम् । एवं लक्ष्यं चसच्चित्सुखवपुरखिलद्वैतहीनं

सुसूक्ष्मं सत्यज्ञानादिमन्त्रोदितमखिलमनोवागतीतं गुहास्थम् ॥ १ ॥

उपादानकर्तृत्वरूपम् उपादानत्वनिमित्तत्वरूपम् अभिन्ननिमित्तोपादानरूपमितियावत् हेतुत्वम् जगज्जन्मादिकारणत्वम् यत् लक्षणम् गदितम् पञ्चदशपद्ये कथितम् तत् इदम् लक्षणम् स्वम् आस्पदम् निजाधिष्ठानम् परमं ब्रह्म शुद्धं ब्रह्म गमयति लक्षयति कस्मात् ताटस्थ्यात् तटस्थत्वात् साक्षात्संवन्धाभावेप्यध्यस्तत्वेन समीपे इव स्थितत्वात् नद्यसंवद्धेनापि तत्तटस्थेन वृक्षादिना लक्षयति नदीं नदीं यियासुं जनं जनो यथा तथात्रापीति भावः कं केव चन्द्रम् शाखा इव कल्पितचन्द्रसामीप्येन शाखाया लोके चन्द्रलक्षकत्वं प्रसिद्धम् लक्ष्यं च ल-

T

क्ष्यमपि एवम् लक्षणमिव कल्पितसंबन्धेनैव अत्र हेतुः कीदृशम् सच्चित्सुखवपुः सच्चिदानन्दरूपम् पुनः अखिलद्वैतहीनम् सर्वद्वैतसंवन्धशून्यम् पुनः सुसूक्ष्मम् यतो नाधिकं किंचित्सूक्ष्मम् पुनः सत्यज्ञानादिमन्त्रोदितम् सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुत्युक्तम् पुनः अखिलमनोवागतीतम् वागाद्यविषयम् पुनः गुहास्थम् अधिष्ठानतयापञ्चकोशरूपावरकस्थम् ॥ १ ॥

लक्ष्यस्याद्वैतत्वायाह, कूटस्थमिति—

कूटस्थं ब्रह्म विश्वं जनयति न विना मायया सा च मिथ्या तस्मिञ्छब्दप्रसिद्धेः परसमधिगमात्तन्निवृत्तिश्रुतेश्च । सैवाविद्या मृषार्था अपि सम-

धिगताः कार्यदक्षाः प्रपञ्चस्तस्मान्मायूरपिच्छच्छविरिव गहनो ब्रह्म संविद्विवर्तः ॥ २ ॥

कूटस्थम् लोहताड़नाधारलोहपिण्डवन्निर्विकारतया स्थितम् ब्रह्म विश्वम् जगत् जनयति परन्तु मायया विना न किन्तु माययैव अन्यथा कूटस्थत्वासिद्धेः सा च माया तु मिथ्या कुतः तस्मिन् शब्दप्रसिद्धेः लोके नटप्रदर्शितमिथ्यार्थे मायाशब्दस्य प्रसिद्धेः च पुनः परसमधिगमात् ब्रह्मज्ञानात् तन्निवृत्तिश्रुतेः मायाया निवृत्तिश्रवणात् सैवाविद्या माया एव अविद्या एतेन ज्ञानाज्ञानविरोधेप्यविरोधिमायानिवृत्तिः कथं ज्ञानेनेति चोद्योनिरस्तः मृषार्थाः अपि असुरादिमायानिर्मितजीवादिपदार्था अपि कार्यदक्षाः स्वोचितयुद्धादिसमर्थाः समधिगताः पुराणादौ प्रसि-

द्धाः एतेन मिथ्यात्वे जगतो न व्यवहारो न हि शुक्तिरूप्यभूषितकरः कोपि दृश्यते इति निरस्तम् विचित्रशक्तिविचित्रपदार्थकल्पना नटमायास्वपि प्रसिद्धेति सर्वचोद्यानवतारप्रकारो वुद्धिमद्भिरत्रोह्य इति निष्कर्षः तस्मात् मायिकत्वात् प्रपञ्चः जगत् ब्रह्म संविद्विवर्तः ब्रह्मचैतन्यस्य रूपान्तरेण प्रतिभासः प्रपञ्चः पुनः कीदृशः मायूरपिच्छच्छविः इव गहनः मयूरावयवपिच्छस्य कान्तिवत् अचिन्त्यः यथासाकान्तिरनेकधाप्रतीतेर्न निश्चीयते तथेति भावः ॥ २ ॥

अथ जगतो ब्रह्मरूपत्वोक्त्या लक्ष्याद्वैतत्वं विशदयति, यस्मादिति—

**यस्माद्विश्वं सदुत्थं सदुपभृतमथो लीयते तत्रतस्मात्सन्मात्रं नान्यदस्मान्मृद इव**

घटिकोदञ्चनादिर्विकारः। सद्भेदे स्यादसत्त्वं सदथयदि तदा नास्ति भेदः कथंचिद्भेदाभेदौ विरुद्धौ नहि भवति भिदाऽभिन्नवस्तुप्रतिष्ठा ॥ ३ ॥

यस्मात् कारणात् विश्वम् जगत् सदुत्थम् सद्रूपब्रह्मणः अभिव्यक्तम् पुनः सदुपभृतम् इदानीमपि सता एव धृतम् अस्ति अथो अनन्तरम् तत्र सति लीयते तस्मात् कारणात् सन्मात्रम् सदेव अस्मात् सतः अन्यत् न कः कस्या इव घटिकोदञ्चनादिः विकारः अल्पघटशरावादिकार्यम् मृदः इव मृत्तिकातः यथा अन्यो न सद्भेदे ब्रह्मतः भेदे सति विश्वस्य असत्त्वम् मिथ्यात्वम् स्यात् अथ यदि विश्वम् सत् इति पक्षः तदा क-


T

थंचित् ब्रह्मतः भेदो नास्ति केनापि प्रकारेण उभयथापि विश्वं मिथ्येति भावः भेदाऽभेदौ विरुद्धौ एकत्रविरुद्धयोः स्थितावश्यमेकहानिर्द्वयोर्मध्ये इति नायं तृतीयपक्षो युक्त इति भावः स्यादेतत् अभिन्नवस्तुप्रतिष्ठा न भिन्नं वस्तु यस्मात् तन्निष्ठा भिदा भेदः नहि भवति नैव भवति प्रतियोग्यभावादिति भावः ॥ ३ ॥

अद्वैताय भेदासिद्धिं दर्शयति, भेद इति—

भेदोऽभिन्ने प्रतीतो भवति
खलु मृषा चन्द्रनानात्मता-
वद्भिन्नेऽभेदश्च तद्वत्सभवति हि
ततो न स्वतो वस्तुभेदः ।
धर्मैर्भेदः प्रसिध्येद्यदि भवति
भिदा धर्मिणो हन्त तेषां भे-

## देऽभेदोपि लोके न खलु परि-चिता धर्मधर्मिव्यवस्था ॥४॥

अभिन्ने भेदशून्ये वस्तुनि प्रतीतो भेदः खलु निश्चयेन मृषा भवति किम्वत् चन्द्र-नानात्मतावत् चन्द्रानेकत्ववत् तथा भिन्ने पृथक् पृथक् स्थिते वस्तुनि प्रतीतः अभेद-श्च अभेदोपि तद्वत् मृषा इदं च दूरस्थवृक्षे-षु प्रसिद्धम् ततः भेदाभेदयोर्मृषात्वात् स्वतः अपेक्षां विना वस्तुभेदः वस्तुस्वरूपस्य भेदा-भेदादिभेदः न प्रभवति किन्तु किञ्चिदपेक्ष-यैवेति भावः नन्वेकस्मिन्नपि कनकादौ कट-कत्वादिधर्मभेदाद्भेदो लोकप्रसिद्धस्तत्राह, ध-र्मैः कटकत्वकुण्डलत्वादिभिः तदा भेदः प्र-सिध्येत् यदि हन्तेति खेदे तेषां धर्माणाम् धर्मिणः कनकादितः भिदा भेदः भवति भ-वेत् न तु सा भवति कनककटकाद्यभेदस्यैव प्रसिद्धेः किंच धर्मधर्मिव्यवस्थापि लोके भेदे

T

गवाश्वादौ अभेदे चन्द्रादौ खलु निश्चयेन न परिचिता न दृष्टा गवाश्वादौ परस्परम् चन्द्रे च स्वस्मिन्नेवधर्मधर्मिव्यवहारादृष्टेरेष व्यवहारोऽपि मृषैवेति न भेदसिद्धिरिति भावः ॥४॥

प्रकारान्तरेण धर्महेतुकभेदासिद्धिं दर्शयति, यदिति—

यच्चाभिन्नं स्वतस्तन्न भवति परतो भेदभाङ्नान्यभेदादन्योऽभिद्येत धर्मः कथमथ विविधा धर्म्यभेदादभिन्नाः । भेदोऽभिन्नाश्रयश्चेदधिकरणभिदा तेन चेदात्मनिष्ठा नोचेदन्योन्यनिष्ठास्थितिंहतिरथवा तद्भिदादुर्निरूपा ॥ ५ ॥

T

च किंच यत् कनकादि स्वतः अभिन्नम् हैमकटकाद्याभिन्नम् तत् परतः कुण्डलत्वादिना भेदभाक् न भवति उत्पन्नभेदवन्न भवति तथा अन्यभेदात् धर्मनिष्टभेदात् अन्यः धर्मीकनकादिः न भिद्येत स्वनिष्टभेदान्तरानुत्पत्तावपि तद्भेदेनैवायमपि भेदवान्न भवति अन्यभेदेनान्यस्य भेदवत्त्वे अभेदोच्छेदापत्तिरिति भावः अथ अनन्तरम् धर्माः विविधाः कथम् धर्मेष्वेव परस्परभेदः कथम् यतः धर्म्यभेदात् कटकादितो हेम्नो भेदाभावात् हेतोः अभिन्नाः धर्मा अपि कटकत्वादयः परस्परमभिन्नाः कटकाभिन्नकनकाभिन्नकुण्डलस्य कटकाभिन्नत्वमेवोचितम्तदाभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति भावः किञ्च भेदः सर्वोऽपि घटपटादिभेदः भेदाश्रयस्याभिन्नत्वोक्तौ व्याघातात् भिन्नाश्रयश्चेत् तर्हि अधिकरणभिदा भेदाश्रयनिष्ठो भेदः तेन चेत् निरूप्यमाणभेदेनैव चेत् तर्हि आ-

T

त्मनिष्ठा आत्माश्रयः नोचेत् तेननो किन्तु भेदान्तरेणेति चेत् भेदान्तरस्यापि भेदत्वेन भिन्नाश्रयकत्वनियमोवश्यं वाच्यः भेदान्तराश्रयनिष्ठभेदस्य च निरूप्यमाणभेदहेतुकत्वे स्वाश्रयभेदाय निरूप्यमाणभेदो भेदान्तरमपेक्षते भेदान्तरं च स्वाश्रयभेदाय निरूप्यमाणभेदमिति अन्योन्यनिष्ठा अन्योन्याश्रयः अथ भेदान्तराश्रयस्य भेदहेतुः तृतीयो भेद इति चेच्चक्रकाख्यदोषः वा पुनः तृतीयभेदाश्रयस्थभेदाय चतुर्थादिभेदाङ्गीकारे तु स्थितिहतिः विश्रान्तिहानिः अनवस्थेति यावत् तत् तस्मात् आश्रयानिरूपणात् भिदादुर्निरूपा भेदमात्रं निरूपयितुमशक्यम् ॥ ५ ॥

प्रकारान्तरेण भेदं खण्डयति, भेदोयमिति-

**भेदोयं भिन्नधर्मिप्रतिभट-विषयज्ञानजज्ञानवेद्यो धर्म्या-**

देर्भेदासिद्धिः पुनरपि च तथेत्यापतेच्चानवस्था। भेदे धर्म्याद्यभेदे बत भवति मृषा भेदबुद्धिर्विभेदे प्रादुःष्युः पूर्वदोषा न च गतिरपरा तेन भेदो मृषैव ॥ ६ ॥

किंच अयं भेदः सामान्यतः सर्वोऽपि भेदः भिन्नधर्मिप्रतिभटविषयज्ञानजज्ञानवेद्यः परस्परभिन्नस्वाश्रयप्रतियोगिविषयकं यज्ज्ञानं तज्जन्यज्ञाने गम्यः भेदज्ञाने भेदाश्रयप्रतियोगिनोः परस्परभिन्नयोर्ज्ञानस्य कारणत्वात् नहि पटप्रतियोगिकघटनिष्ठभेदस्य घटपटज्ञानमन्तराज्ञानामिति भावः एवं च धर्म्यादेर्भेदासिद्धिरपि च पुनस्तथा कारणीभूतज्ञानविषयस्य धर्म्यादेः धर्मिप्रतियोगिनोः

T

परस्परभेदस्य ज्ञानमपि तु तथैव धर्मिप्रतियोगिज्ञानाधीनमेव इति एवम् अनवस्था च आपतेत् कारणीभूतज्ञानधाराया अविश्रान्तेः अथैतद्दोषभिया भेदे भेदपदार्थे धर्म्याद्यभेदे धर्मितः प्रतियोगितः भेदान्तराच्च अभेदे अङ्गीकृते वर्तेति खेदे भेदवुद्धिर्मृषा भवति भेदस्य सर्वाभिन्नत्वेनोच्छेदापत्तेः एतद्भिया भेदे पदार्थे विभेदे धर्म्यादिप्रतियोगिकभेदेऽङ्गीकृते पूर्वदोषाः आत्माश्रयादयः प्रादुःष्युः प्रकटीभवेयु अपरा अन्या च गतिः उपपत्तिः न तेन हेतुना भेदो मृषैव मिथ्यैव ॥ ६ ॥

भेदासिद्धौ प्रकारान्तरं दर्शयति, द्रव्येइति–

द्रव्ये भेदस्य योगो न भवति निरुपाख्यस्य भावस्वरूपो नाभावोन्यः समत्वादनुभयवि-

लनान्नापि तत्तत्स्वरूपम् । भावाभावातिरिक्तं न च किमपि तयोरस्ति सम्बन्धरूपं निःसम्बन्धेपि शुक्तौ रजतमिव मृषा तेन भेदः प्रतीतः ॥ ७ ॥

निरुपाख्यस्य अन्योन्याभावरूपत्वेन किंचिद्वस्तुरूपतया वक्तुमशक्यस्य शून्यस्वरूपस्य भेदस्य द्रव्ये योगः कस्मिंश्चिदपि वस्तुनि सम्बन्धः न भवति न संभवति यतः योगः भावस्वरूपः सम्बन्धश्च संबन्धिभ्यां भिन्नः सम्बन्धिनिष्ठो भावरूपः तदाधारता चावस्तुत्वेन भेदे न संभवतीति भावः अथ अभावः सच सम्बन्धः अभावरूपः तर्हि अन्यः न सम्बन्धिभ्यां भिन्नो न कुतः समत्वात् भेदस्याप्यभावरूपत्वेन एकरूपत्वात् पुनः स सम्बन्धः तत्तत्स्वरूपम् अपि न सम्ब-

न्धिस्वरूपमपि न कस्मात् अनुभयमिलनात् मिलनस्यैव सम्बन्धपदार्थत्वेन सम्बन्धिस्वरूपयोरुभयोः पृथगवस्थानात् सम्बन्धिभिन्नत्वसम्बन्धिनिष्ठत्वाभावात् अथ तयोः भेदभेदाधारयोः भावाभावातिरिक्तम् सम्बन्धरूपम् च किमपि नास्ति उभयविधातिरिक्तस्यासत्त्वात् तेन हेतुना निःसम्बन्धेपि सम्बन्धाभावेपि प्रतीतः प्रतीयमानः भेदः मृषा किमिव शुक्तौरजतमिव ॥ ७ ॥

प्रत्यक्षादिसिद्धत्वेन प्रामाणिकत्वादभ्युपेयो भेद इत्यत आह, संयोगादेरिति—

संयोगादेरयोगान्नहि भवति भिदा गोचरश्चेन्द्रियाणां व्याप्तिर्नासङ्गताया न भवति सदृशी वाक्यतात्पर्यदूरा । मा-

नाभावो न मानं न च पुनरपरं मानमस्यां तथापि प्रत्यक्षास्वाप्नमायानगरमिव भवेत्साधु सैषा मृषैव ॥ ८ ॥

भिदा भेदः इन्द्रियाणां गोचरो न भवति कुतः संयोगादेः सन्निकर्षस्य अयोगात् भेदस्यावस्तुत्वादिना सर्वथा सम्बन्धयोग्यताया निरस्तत्वादिति भावः एवम् क्वचिदपि असङ्गतायाः सम्बन्धशून्याया भिदायाः व्याप्तिर्न यत्कुत्रापि नास्त्येव तस्य क्व व्याप्तिर्यागृह्येत पुनः सा भिदा सदृशी न भवति निरुपाख्ये भेदे किञ्चित्सादृश्यसम्बन्धो न संभवति उपमितिश्च सादृश्यज्ञानाधीना पुनः भिदा वाक्यतात्पर्यदूरा अद्वैतरूपवेदतात्पर्यादत्यसंबद्धा मानाभावः मानमुपलब्धिः तदभावोनुपलब्धिः मानम् न मानमेव न भवति

अभावत्वेनावस्तुत्वादिति भावः पुनः अस्याम् भिदायाम् अपरञ्च मानम् अन्यदपि मानम् अर्थापत्त्यादि न संभवति अनुमानान्तर्गतत्वादेरित्याद्यूह्यम् प्रत्यक्षानुमानोपमानशब्दानुपलब्धिगोचरता तु क्रमेण निरस्तैव भिदाया इति भावः तथापि प्रमाणाविषयत्वेपि प्रत्यक्षा सर्वानुभवसिद्धा सा एषा भिदा साधु सम्यक् मृषा एव भवेत् किमिव स्वाप्नमायानगरम् इव स्वप्नप्रकटितनगरम् इव नटमायाप्रकटितनगरमिवच इदमेव मिथ्यात्वं नाम यदप्रामाणिकत्वेपि प्रतीतिरिति भावः ॥ ८ ॥

द्वित्वादिरूपभेदनिरासायाह, वाह्य इति—

**वाह्योर्थ्योबुद्धिमात्रान्न भवति स भवन् गोचरः स्यात्परेषामेकैकं न द्वयं चेदुभयमि-**

ति मृषा तद्विशिष्टप्रथा च ।
द्वित्वादेः संकरः स्यान्नखलु
भवति ते प्रागभावाद्यवस्था
नापेक्षाबुद्धिक्लृप्तिःसकलम-
पि शनैर्योज्यमेतत्पृथक्त्वे ॥९॥

वाह्योर्थः वहिर्भूतः बुद्धेः वहिर्भूतलादिप्र-
देशे जातः सत्यपदार्थः बुद्धिमात्रात् केवल-
बुद्धिनिमित्तात् न भवति नोत्पद्यते द्वित्वं तु
वहिर्भूतघटद्वयादिप्रदेशेऽयमेकोऽयमेक इत्य-
पेक्षाबुद्ध्योत्पद्यते अनन्तरमिमौ द्वौ घटावि-
तिप्रतीतेरिति स्वीक्रियते भेदवादिभिः तथा
च मेघेषु बुद्धिकल्पितनगरवन्मिथ्यैव स्यादि-
ति भावः किंच त्वन्मते बुद्धिजः स द्वित्वा-
दिपदार्थः भवन् उत्पन्नस्सन् परेषां गोचरः
स्यात् पुरुषान्तरगम्यः स्यात् सत्यवाह्यघ-

टादिवत् न तु तथा भवतीति कल्पकैकगोचरत्वेन तद्बुद्धिमात्रवृत्तिस्वाभ्रवन्मिथ्यैव किंच एकैकम् चेत् न द्वयम् एकैकवस्तुनि द्वित्वाप्रतीतेः एकमेकं घटादिवस्तु यदि द्वित्वशून्यम् तर्हि उभयम् घटादियुग्मम् द्वित्वविशिष्टम् इतिमृषा घटद्वयेद्वित्वप्रतीतिर्मिथ्या घटयोर्द्वित्वाभावस्यापिसत्त्वात् तदभाववतितत्प्रकारकबोधस्याप्रमात्वात् तद्विशिष्टप्रथा च मृषा द्वित्वविशिष्टघटादिज्ञानं चाप्रमा किञ्च द्वित्वादेः द्वित्वात्रित्वादेः संकरः स्यात् वहूनां समानाश्रयकत्वरूपः ते तव खलु निश्चयेन प्रागभावात् हेतोः व्यवस्था न भवति सर्वत्र द्वित्वादिप्रतीतेरत्रैव द्वित्वादिप्रागभाव इत्यनिश्चयादिति भावः अपेक्षाबुद्ध्यापि न व्यवस्था स्यात् यतः अपेक्षाबुद्धिक्लृप्तिः न अत्रेदृश्यपेक्षाबुद्धिर्हेतुरिति अपेक्षाबुद्धेः निश्चयो नास्ति अयमेकोयमेक इत्यपेक्षया इमौ द्वौ अयमेक इत्यपे-

क्षया च त्रित्वप्रतीतेः एतत्सकलम् पूर्वोक्तसर्वदूषणम् पृथक्त्वेपि पृथक्त्वरूपभेदेपि शनैर्योज्यम् क्रमशो योजनीयम् संख्यावत्पृथक्त्वस्याप्यपेक्षाबुद्धिजन्यत्वेन तुल्यत्वादिति भावः ॥ ९ ॥

तत्तत्कार्याणामुपादानकारणरूपाधिकरणस्वरूप एव भेदइत्यत्राह,कार्यमिति—

कार्यं नान्यन्निदानात्पृथगनधिगमान्नह्युपादानहेत्वोर्वैलक्षण्यं तथात्वे न भवति समवायाद्यवस्थानुपेतात् । नो चेत्स्वर्णादिकार्ये द्विगुणगुरुतया मूल्यवृद्धिप्रसङ्गोवस्थाभेदाद्विभेदे स्थितिगतिभिदया भेदिनः स्युर्नराश्च ॥ १० ॥

T .

कार्यम् निदानात् उपादानकारणात् अन्यत् न स्वरूपतोपि भिन्नं न कुतः पृथगनधिगमात् उपादानात् पृथक्कृत्यकार्यस्य दर्शयितुमशक्यत्वात् तथात्वे कार्यस्यान्यत्वे हि यस्मात् उपादानहेत्वोः वैलक्षण्यम् न विशेषो न स्यात् स्वानतिरिक्तातिरिक्तकार्योत्पादकत्वमेव हि वैलक्षण्यम् समवायो हेतूपादानभेदको भवेदित्यत्राह अनुपेतात् अस्वीकृतात् समवायात् हेतूपादानव्यवस्था न भवति समवायाभ्युपगमे हि सम्बन्धिभिन्नसमवायश्च सम्बन्धिनौ समवायेनैवाश्रयेत् स चात्माश्रयाभियान्य एव समवायः एष च समवायत्वाविशेषात्समवायेनैव स्वसंबन्धिनावाश्रयेत् स चापरएवान्योन्याश्रयभियेत्यनवस्थान्तो दोषः नोचेत् कार्यं कारणरूपं चेत् नो तर्हि स्वर्णादिकार्ये कटकादौ मूल्यवृद्धिप्रसङ्गः कारणमूल्यात् द्विगुणं कार्यमूल्यं स्यात् कया द्विगुणगुरुतया कारणगुरु-

त्वेनातिरिक्तकार्यद्रव्ये स्वसदृशगुरुत्वान्तरोत्पत्त्या कारणात्कार्यपरिमाणस्य द्वैगुण्यापत्त्या अथ अवस्थाभेदात् कार्यकारणात्यन्ताभेदेपि कटककुण्डलादिरूपावस्थापरिणामभेदात् विभेदे कनकस्वरूपभेदे स्वीकृते स्थितिगतिभिदया गतिनिवृत्तिगमनादिरूपावस्थाभेदेन नराश्च नरा अपि भेदिनः भेदवन्तः स्युः तथाच प्रत्यवस्थं देवदत्तस्य भेदेन जननमरणहेतुकक्रियासङ्गः स्यात् ॥ १० ॥

कार्यकारणभेदप्रत्ययो मायिको न वस्तुदृष्ट्येत्याह, पिण्डावस्थेति—

पिण्डावस्था घटत्वे मनसि विमृशतो हेतुकार्यत्वधीः स्यान्मृन्मात्रं यद्वदेकं स्फुटमभिमृशतो नैव हेतुर्न कार्यम् । त-

द्वन्मायिप्रपञ्चौ मनसि कलयतो ब्रह्म विश्वस्य हेतुः सन्मात्रं त्वेकरूपं पटु परिमृशतो नैव मायी न विश्वम् ॥११॥

पिण्डावस्था घटत्वे मृदः इमे द्वे अवस्थे मनसि विमृशतः भेदेन भावयतः पुरुषस्य हेतुकार्यत्वधीः स्यात् कार्यकारणभावरूपभेदबुद्धिः स्यात् उक्तावस्थयोः एकम् मृन्मात्रम् स्फुटम् अभिव्यक्तम् अभिमृशतः पुरुषस्य यद्वत् यथा नैव हेतुः नकार्यम् कार्यकारणभेदो न तद्वत् तथा मायिप्रपञ्चौ ईश्वरब्रह्माण्डौ मनसि कलयतः पृथग्भावयतः विश्वस्य हेतुः ब्रह्म कार्यकारणभेदः इति यावत् सन्मात्रम् एकरूपम् मायिप्रपञ्चयोः एकसद्रूपम् पटु दृढम् परिमृशतः नैव मायी न विश्वम् नैष भेद इति भावः ॥ ११ ॥

मिथ्यात्वे सत्यतया कथं प्रतीयते ज-
गदित्यत्राह, सन्कुम्भ इति—

सन्कुम्भः सत्कुसूलं सद-
खिलमिति यद्भाति यच्च श्रुतं
प्राक् तत्सत्यं व्याप्य विश्वं घ-
टपिठरमुखं मृत्तिकेवावभाति ।
तस्मिन् रज्जाविवाहिर्निखिल-
मपि जगत्कल्पितं तत्स्वभावा-
त्तन्मात्रं तत्पृथक्त्वे ह्यसदिद-
मखिलं स्यात्तदेवह्यभेदे ॥१२॥

कुम्भः सन् सत्यः कुसूलम् धान्यपात्रम्
सत् अखिलम् सर्वम् सत् इति एवमेकरूपेण
यत् सत्यम् भाति च पुनः यत् प्राक् सृष्टेः
पुरा श्रुतम् श्रुतिषु निरूपितम् तत्सत्यम् वि-

श्वं व्याप्य अवभाति केव घटपिठरमुखम् मृत्तिका इव स्वकार्यानुगता सती घटस्थाल्यादि व्याप्य मृत्तिका यथावभाति रज्जौ अहिः इव तस्मिन् सद्रूपब्रह्मणि निखिलमपि जगत् कल्पितम् अतः तत्स्वभावात् अधिष्ठानरूपत्वात् तन्मात्रम् ब्रह्मैव तत्पृथक्त्वे हि सतः अन्यत्वे तु अखिलमिदम् जगत् असत्स्यात् सद्भिन्नस्य गत्यन्तराभावात् अभेदे हि सद्रूपत्वे तु तदेव ब्रह्मैव ॥ १२ ॥

सर्वस्य सद्रूपत्वे शुक्तिरजतान्यरजतयोर्बाधाबाधौ कथमत आह, एकेति—

एकैव ब्रह्मसत्ता व्यवहृतिविषये शुक्तिरूप्यादिके च ख्यान्त्याद्ये सत्यमेतज्जगदिति धियमाब्रह्मबोधाद्विधत्ते । याव-

त्स्फूर्ति द्वितीये प्रथितमिव
पटस्फाटिके रक्तरूपं माञ्जिष्ठं
साधुरक्तः पट इति न मृषा
स्फाटिके तन्मृषेति ॥ १३ ॥

व्यवहृतिविषये क्रयविक्रयादिव्यवहारास्पदे रजतादौ शुक्तिरूप्यादिके च शुक्तौ भातरजतादौ च ख्यान्ती भासमाना ब्रह्मसत्ता एकैव तथापि आद्ये व्यवहृतिविषये आब्रह्मबोधात् ब्रह्मसाक्षात्कारपर्यन्तम् एतज्जगत्सत्यम् इति धियं विधत्ते इति प्रतीतिं जनयति द्वितीये शुक्तिरजतादौ यावत्स्फूर्ति इदं रजतमिति प्रतीतिपर्यन्तमेव एतत्सत्यमिति धियं विधत्ते नेदं रजतमिति बाधकस्याशुप्रवृत्तेरितिभावः किमिव पटस्फाटिके प्रथितम् वस्त्रे स्फटिककार्यकुण्डिकादौ च प्रतीतम् माञ्जिष्ठम् मञ्जिष्ठसम्बन्धिरक्तरूपम्

इव कथम् वस्तुतो रक्तरूपस्य मञ्जिष्ठावयवस्थत्वेपि पटे रक्तः पट इति ज्ञानं न मृषा किन्तु साधु सत्यम् स्फाटिके तत् रक्तः स्फटिक इति ज्ञानम् मृषा इति इत्थम् ॥ १३ ॥

ननु ब्रह्म सन्मात्रं चेत् सामान्यविशेषांशद्वयवत एवाधिष्ठानत्वात् नैकरसं ब्रह्माधिष्ठानम् तथा सर्वेषां सुखार्थित्वान्नकोपि ब्रह्मार्थी स्यात् सच्चिदानन्दात्मकत्वे तु ऐकरस्यनिरवयवत्वादिहानिरत आह, सदिति—

सच्चित्सौख्यैकरस्येप्यनृतजड़महादुःखमोहान्यभावात्सत्यज्ञानादिवाक्यव्यवहृतिविषये कल्पिते रूपभेदे । शुक्तीदन्तेव सत्ता स्फुरति समरसा कल्पितेनानुविद्धा शुक्तित्वा-

T

दीव मायावरणपरिभवाच्चि-
त्सुखत्वे न भातः ॥ १४ ॥

सच्चित्सौख्यैकरस्येपि रस आत्मा सच्चिदानन्दानाम् एकात्मत्वेपि सत्यज्ञानादिवाक्यव्यवहृतिविषये रूपभेदे कल्पिते सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवाक्येन वोध्यवोधनरूपव्यवहारविषये सत्यत्वज्ञानत्वानन्दत्वरूपरूपभेदे कल्पिते सति कल्पनायां हेतुः कस्मात् अनृतजड़महादुःखमोहान्यभावात् मिथ्यादिरूपमोहादज्ञानात् अन्यत्वात् अन्यस्वभावत्वादात्मनः सत्यत्वाद्यनेकांशरूपभेदकल्पनं तु ब्रह्मणि मिथ्यात्वादिनिराकरणायैवश्रुत्यादिभिरितिभावः इत्थमंशे कल्पिते सत्ता सत्तांशस्तु कल्पितेन जगत्पदार्थेन अनुविद्धा व्याप्ता कल्पितेन समरसा तुल्परूपा सती स्फुरति का इव शुक्तीदन्ता इव यथा शुक्तिगतेदमंशः रजतेन व्याप्ता रजतरूपा सती इदं

T

रजतमिति स्फुरति तथा सज्जगदिति च चित्सुखत्वे चित्त्वमानन्दत्वं च न भातः कस्मात् मायावरणपरिभवात् मायया वृतत्वात् किमिव शुक्तित्वादि इव अज्ञानावृतं शुक्तित्वत्रिकोणत्वादिकं यथा न भाति तद्वत् कल्पितांशादिस्वीकारे न काचिद्धानिः सकलेष्टसिद्धिश्चेति भावः ॥ १४ ॥

तटस्थलक्षणेन सृष्टिश्रुतयोऽधिष्ठानं ब्रह्म बोधयन्तीत्यत्र दृष्टान्तमाह, पृष्टे इति—

पृष्टे कोस्मिन्समाजे नरपतिरिति यो मत्तमातङ्गपृष्ठे मुक्ताजालान्तराले शशिधवललसच्छत्रमूले स्फुरन्सः । इत्युक्तः पुंविशेषं सपदि परिचिनोत्येष राजेति सर्वं मुक्त्वैकं येन

T

# पश्यन्नमुमपरविधं सैष राजे-ति वेत्ति ॥ १५ ॥

अस्मिन् समाजे नरपतिः राजा कः इति पृष्टे पृच्छ्यमाने सति मत्तगजपृष्ठे मुक्तामय-चतुरस्रगजपृष्ठावलम्बिजालमध्ये चन्द्रवत्स्व च्छशोभायमानच्छत्रस्य मूलदेशे स्फुरन् अ-साधारणवासो भूषादिभिर्दीप्यमानः यः सः राजा इत्युक्तः प्रश्नकर्ता सर्वम् विशेषणं त्य-क्त्वा एकं पुरुषविशेषम् एषः अयम् राजा इति सपदि तत्कालमेव जानाति नतु विशेषण-सहितम् येन हेतुना कालान्तरे अपरविधम् उक्तसर्वलक्षणान्यलक्षणयुतम् अमुम् राजान-म् पश्यन् स एष यः पूर्वं दृष्टः स एवायं राजा इति जानाति ॥ १५ ॥

दृष्टान्तं दार्ष्टान्तिके योजयति, वर्णिता इति—

स्फो घ्रता

# वर्णिता विविदिषादियन्त्र-

णात्पुंविशेषमिव लक्षणोक्तयः।
विश्वसर्गविषयागमाः परं लक्ष-
यन्ति निरवद्यचिद्घनम् ॥१६॥

विविदिषादियन्त्रणात् श्रोतृजिज्ञासा व-क्तृतात्पर्यानुरोधात् हेतोः वर्णिताः लक्षणोक्तयः पूर्वपद्योक्तराजलक्षणवाक्यानि पुंविशेषमिव श्रोतुर्जिज्ञासावक्तुश्च तात्पर्यं न विशेषणेष्विति केवलपुरुषव्यक्तिविशेषमेव यथा लक्षयन्ति तद्वत् जगदुत्पत्तिविषयकवेदवाक्यानि मायातत्कार्यदोषरहितचिन्मूर्तिम् परं ब्रह्म लक्षयन्ति ॥ १६ ॥

सृष्टिवाक्यानां निर्विशेषलक्षणकत्वं निरूपयति, तत्त्वमर्थवदिति—

तत्त्वमर्थवदत्रयद्यपि नान्व-
यानुपपत्तिधीर्नाप्यभिन्नपदा-

र्थकत्वमतःपदेषु न लक्षणा ।
भेदसङ्गतिकानि तानि समेत्य
सत्यचिदद्वयं तत्पराणिहिल-
क्षयेयुरुपक्रमाद्यनुसारतः ॥१७॥

यद्यपि तत्त्वमर्थवत् तत्त्वमसीतिमहावाक्यस्थतत्त्वंपदार्थयोरिव अत्र सृष्टिवाक्येषु यतोवेत्यादिषु अन्वयानुपपत्तिधीः लक्षणावीजम् नास्ति तथा तत्त्वमस्यादिवाक्यवत् सृष्टिवाक्यानाम् अभिन्नपदार्थकत्वमपि नास्ति पदार्थाभेदोद्बोधकसमानविभक्तिमत्त्वादि नास्ति अतः हेतोः पदेषु लक्षणा न तथापि भेदसंगतिकानि भेदसम्बन्धेन परस्परान्वितानि सर्वसृष्टिवाक्यानि समेत्य अभिन्ननिमित्तोपादानरूपैककारणार्थप्रतिपादनेन एकवाक्यतां प्राप्य सत्यचिद्रूपम् अद्वयम् अखण्डम् ब्रह्म लक्षयेयुः हि यतः उपक्रमोपसं-

हारादिषड्विधलिङ्गानुरोधात् उक्तविधब्रह्मपराणि तानि तथाच वाक्ये लक्षणासंभवत्येवेति भावः ॥ १७ ॥

एवं च किमिति सृष्टिवाक्यानि भूयोभूयः कीर्तयन्ति सृष्ट्यादीनेव तत्राह, अक्षजादीति–

अक्षजादिवहिःप्रमाणसमेधितद्वयविभ्रमे जाग्रति श्रुतिरद्वयप्रतिवोधने सहसाऽक्षमा । व्यावहारिकवस्तुजातमिदं मृषेति विवक्षया प्रक्रियां रचयांबभूव विसृष्टिसंहृतिलक्षणाम्॥

प्रत्यक्षादिवाह्यविषयकप्रमाणैः सम्यग्वर्द्धितद्वैतभ्रमे जाग्रति सत्यतया सर्वबुद्धौ स्फुरति सति झटिति अद्वैतवोधने असमर्था स-

ती श्रुतिः उत्पत्तिप्रलयरूपाम् प्रक्रियाम् नि-र्मितवती कया इदं व्यावहारिकं वस्तुसमूह-म् मिथ्या इतिविवक्षया इतिवक्तुमिच्छया इ-तितात्पर्येण तथाचानित्यत्वबोधनेन ज-गतो ब्रह्माद्वयत्वबोधनोपायतयोत्पत्त्यादिकी-र्तयन्ति श्रुतय इतिभावः ॥ १८ ॥

अथ ब्रह्मवल्लीश्रुतीनामद्वयबोधक-त्वमाह, ब्रह्मेति—

ब्रह्म सच्चिदनन्तमेकमशे-षवाङ्मनसातिगं पञ्चकोशगु-हान्तरं च निगद्यशश्वदलौकि-कम् । तद्विसृज्य विवेशसत्य-मसत्यमित्युभयं स्वतः सत्य-मित्यभिधायिनी श्रुतिरद्वयं स्फुटमभ्यधात् ॥ १९ ॥

T

उपक्रमे सच्चिदनन्तम् ब्रह्म निगद्य अन्ते च एकम् अशेषवाङ्मनसातिगम् सर्वलौकिकवैदिकवचांसि सर्वप्राणिमनांसि चातिक्रम्य स्थितम् तदगोचरम् ब्रह्म निगद्य मध्ये च पञ्चकोशगुहान्तरम् ब्रह्म शश्वत् निगद्य पञ्चकोशरूपगुहानाम् प्रत्येकमध्यस्थम् सर्वकोशाधिष्ठानंचाभ्यासेनोक्त्वा अलौकिकम् लोकेन न विदितम् केवलमुपनिषद्गम्यम् निगद्य तत् ब्रह्म सत्यमसत्यम् सत्यमिथ्यारूपकं जगत् विसृज्य उत्पाद्य इत्युभयम् उक्तोभयात्मकम् विवेश सत्ताप्रदत्वेन व्याप तथा च जगदधिष्ठानब्रह्मसत्यतयासादितिभावः ब्रह्म तु स्वतः सत्यम् इत्यभिधायिनी कथनशीला श्रुतिः ब्रह्मवल्ली व्यक्तम् अद्वैतम् अवोचत् इत्युपक्रमादिलिङ्गैर्निर्णीतमिति भावः ॥ १९ ॥

T

सृष्टिवाक्यानामद्वये तात्पर्यं प्रकारान्तरेणाह, ब्रह्मविदिति—

ब्रह्मवित्परमेति तत्खलु सच्चिदद्वयलक्षणं वेदनं च गुहान्तरस्य निजस्वरूपतदाप्तये।
इत्युदीर्य सदद्वयत्वसमर्थनाय समाददे विश्वसृष्टिमिमां श्रुतिर्नहि तत्समर्थनमन्यथा॥२०॥

ब्रह्मवित् ब्रह्मज्ञानी परं मोक्षम् प्राप्नोति तत्खलु ब्रह्म तु नित्यचेतनद्वैतशून्यरूपम् वेदनं च ज्ञानं तु साक्षितया बुद्धिगुहान्तर्गतस्य प्रत्यगात्मनः निजरूपब्रह्मप्राप्त्यर्थम् इत्युक्त्वा श्रुतिः स्वोक्तसत्यत्वाद्वयत्वयोः निरूपणाय इमां जगदुत्पत्तिप्रक्रियाम् समाददे उवाच हि यतः अन्यथा प्रकारान्तरेण निरपेक्षस-

त्यत्वादिसमर्थनम् न सम्भवति ॥ २० ॥

एवमृग्वेदोपनिषत्तात्पर्यमपि ब्रह्मण्ये-
वेति दर्शयति, एक इति—

एक एव पुरा बभूव न चापरं
स किलाखिलं वीक्ष्य विश्वमिदं
ससर्ज तनुं प्रविश्य निरीक्षते।
स्वप्नमावसथ त्रयं स विचारतः
प्रतिबुद्धवान् स्वात्मनैव सम-
स्तकाममवाप्नुवन्नमृतोभवत् ॥

सृष्टेः पूर्वम् एक आत्मैव आसीत् अन्य-
त्तु न स किल स वै आत्मा सर्वं जगत् वी-
क्ष्य एवं कार्यमितिमाययानुसन्धाय इदं वि-
श्वम् ससर्ज ततः प्रत्यगात्मना शरीरं प्रवि-
श्य नेत्रकण्ठहृदयरूपस्थानत्रयम् अवस्थात्र-

T

यमिति यावत् एतदेव स्वप्नः मिथ्यात्वात्तं पश्यति सः शरीरोपाधिकः आत्मा दैवाद् गुरूपदिष्टविचारेण प्रतिबुद्धवान्सन् चिन्मात्रात्मस्वरूपप्रतिबोधरूपजाग्रदवस्थां प्राप्तः सन् क्षुद्रानन्दानां तत्रैवान्तर्भावात् स्वस्वरूपेणैव सर्वकामान्प्राप्नुवन् निवृत्तान्यवासनस्सन् अमृतः मरणरहितः अभवत् एवं वदन्ती श्रुतिरपि व्यक्तं ब्रह्मण्येवतात्पर्यवतीति भावः ॥ २१ ॥

यजुर्वेदोपानिषदोप्यत्रैव समन्वयं दर्शयति, स्थूलेति—

स्थूलसूक्ष्मविभागिमूर्तममूर्तमित्यखिलं जगत् ब्रह्मणो द्विविधं हि रूपमिति प्रकल्प्य विभागतः । आदिशन्त्यथ

  

नेति नेति निषिध्यरूपमशे-
षतः काण्ववाजसनेयकश्रुति-
रप्यशेषयदद्वयम् ॥ २२ ॥

पृथिव्यादित्रयं स्थूलं मूर्तम् वाय्वाकाश-द्वयं सूक्ष्ममममूर्तम् तथाच काण्वमाध्यन्दिन-शाखाद्वयश्रुतिरपि मूर्तम् अमूर्तम् इति स्थूलसूक्ष्मविभागयुतम् सर्वंजगत् ब्रह्मणोहि द्विविधं रूपम् विभागतः मूर्तामूर्तादिविभागेन इति प्रकल्प्य अध्यारोप्य अथ अनन्तरम् इति न इति न इत्येवम् अशेषतः साकल्पेन द्विविधम् रूपम् निषिध्य अपोद्य शिष्टमधिष्ठानम् चिन्मात्रम् आदिशन्ती उपदिशन्ती अद्वयमेव अशेषयत् परिशिष्टमकरोत् ॥ २२॥

एवं सामवेदोपनिषच्छ्रुतिं दर्शयति, यदिति-

यस्यबोधवशादशेषमिदं ज-

T

गद्विदितं भवेत्तद्विवक्तुमुपक्र-
मोत्र सदेव सोम्यगिरा ततः।
सृष्टिरीक्षणपूर्विका जगतस्त-
दैक्यविवक्षया मृत्तिकादिनि-
दर्शनानि तथाहि संगतिमा-
प्नुयुः ॥ २३ ॥

यस्य ज्ञानात् सर्वमिदं जगज्ज्ञातं स्यात् तदेव वक्तुम् अत्रोपनिषदि सदेव सोम्येद-मग्र आसीत् एकमेवाद्वयमिति गिरा यस्मा-त् उपक्रमः ततः तस्माद्धेतोः ज्ञानपूर्वकजग-दुत्पत्तिरपि उक्तगिराप्रतिज्ञातैकत्वविवक्षयैव उक्तोपनिषदुक्तमृत्पिण्डादिदृष्टान्ताश्च तेनैव प्रकारेण संगतिम् दार्ष्टान्तिकेन समन्वयं प्राप्नुयुः ॥ २३ ॥

T

सामवेदोपनिषद्युक्ततात्पर्यश्रुत्युपरितनग्रन्थपर्यालोचनयापि सृष्टिवाक्यानामिदमेव तात्पर्यमित्याह, सत्प्रसूतमिति—

सत्प्रसूतमिदं सति स्थितमस्तमेति सति स्वतः सत्तया परिहीणमित्यखिलं सदेव पृथङ्मृषा । कल्पितं हि पृथक् न सन्मृगतृष्णिकोदकवन्मरोस्तत्सदद्वयमेव वस्त्विति सृष्टिवाक्यसमीहितम् ॥ २४ ॥

इदं जगत् सद्रूपब्रह्मण एवोत्पन्नम् पुनः सत्येवस्थितम् सत्येव च लयं याति अतः स्वतः सत्तया परिहीणम् कारणसत्तातिरिक्तनिजसत्तारहितम् इति हेतोः सर्वम् का-

रणस्वरूपमेव कारणीभूतसतः पृथक् तु मृषा इतिह्युत्तरग्रन्थे उक्तम् कल्पितं तु पृथक् न भवति यथा मरोः सूर्यसन्तप्तनिरुदकप्रान्तरभूमितः मृगतृष्णाजलं न पृथग्भवति तद्वत् तत् तस्मात्कारणात् सद्वस्तु अद्वयमेव इति सृष्टिवाक्यतात्पर्यम् ॥ २४ ॥

आथर्वणसृष्टिवाक्यान्यप्येवमेवेत्याह, विद्ययेति—

विद्यया परयाधिगम्यमुदीर्यं धर्मविवर्जितं सूक्ष्ममक्षरतस्ततः प्रभवत्यशेषजगन्मृषा।
तद्धिसत्यमिति स्फुटं परिशेष्यवेदनमात्रतस्तत्स्वयं भवतीति नित्यमवाप्तमाहतुरीयगीः ॥ २५ ॥

T

सर्वधर्मरहितम् सर्वसूक्ष्मादपि सूक्ष्मम् परविद्यया ज्ञेयम् आथर्वणोपनिषदुपक्रमे उदीर्य्य उक्त्वा निर्विकारात् ततः ज्ञेयाद्ब्रह्मणः अशेषजगत् जायते तच्चमृषेति पृथिव्योषध्यादिदृष्टान्तेनोक्तम् तद्धि तदेव सत्यम् ज्ञेयं ब्रह्मैव सदिति तत उक्तम् ततः सर्वापवादेन स्फुटं यथास्यात्तथा ब्रह्ममात्रम् परिशेष्य अधिष्ठानतया निरूप्य केवलाज्ञानादेव कण्ठगतचामीकरवदप्राप्तमिव भवत्यतः ज्ञानमात्रात् स्वयम् तत् ब्रह्म भवति वेत्ता इतिरीत्या सदाप्राप्तमेव स्वरूपभूतमेव ब्रह्म तुरीयगीः चतुर्थवेदः आह उक्तवान् अतो द्वैततात्पर्यवानेवेति भावः ॥ २५ ॥

माण्डुक्यतात्पर्यमाह, भूतेति—

**भूतभाविभवज्जगत्परमं च सत् प्रणवात्मकं पादशः प्रवि**

भज्य निन्हुतवाच्यवाचकभेदकम् । पूर्वपूर्वमथोत्तरत्वविलाप्यतुर्यमलक्षणं स्वात्मरूपमथर्वणः श्रुतिरभ्यधाच्छिवमद्वयम् ॥ २६ ॥

भूतभविष्यद्वर्तमानकालिकं जगत् उत्कृष्टं सद्रूपं कारणं च त्यक्तवाच्यवाचकभेदं यथा स्यात्तथा ओङ्काररूपमित्युक्त्वा सजगदात्मस्वरूपं प्रणवात्मकं चतुर्भिः पादैः पृथक्कृत्वा अथ अनन्तरम् पूर्वं पूर्वं पादमुत्तरोत्तरपादे लीनं कृत्वा एकीकृत्य तुर्यम् चतुर्थं पादम् लक्षणहीनं द्वैतहीनं परमानन्दरूपं स्वात्मनः परमार्थरूपम् अथर्वणः श्रुतिः अभ्यधात् अवोचत् पादविभागस्तु विश्ववैश्वानररूपाकारः प्रथमः तैजसहिरण्यगर्भरूपोकारो द्वि-

तीयः प्राज्ञाव्याकृतरूपमकारस्तृतीयः शुद्ध-चिद्रूपार्द्धमात्रा चतुर्थं इति ॥ २६ ॥

श्रुत्यन्तरेषु निर्णयमतिदिशन् एतावद्ग्रन्थोक्ततटस्थलक्षणफलमाह, इत्थमिति—

इत्थमेव ततस्ततः श्रुतसृष्टि-वाक्यकदम्बकं प्रक्रियाद्यभि-शीलनेन सदद्वयेन समानयेत्। युक्तिभिः श्रुतिभिश्च सैष तट-स्थलक्षणसंग्रहः तत्फले खलु लक्ष्यसत्त्वपरिच्छिदात्रयवार-णे ॥ २७ ॥

उक्तरीत्यैव तत्र तत्र वेदान्ते श्रुतम् सृष्टिवाक्यसमूहम् प्रकरणरूपोपक्रमादिविचारेण पूर्वाचार्योक्तयुक्तिभिः श्रुत्यन्तरैश्च सद्व-

T

पाद्वैतेन तात्पर्यतो योजयेत् स पूर्वोक्तः तटस्थलक्षणसंग्रहः एष एतावान् तटस्थलक्षणफले तु लक्ष्यब्रह्मणस्सत्यत्वम् देशकालवस्तुकृतत्रिविधान्तस्य निवारणं च ॥ २७ ॥

अथ तटस्थलक्षणफलं स्वरूपलक्षणमाह, सदिति—

सच्चिदद्वयसौख्यरूपममुष्य
वास्तवलक्षणं नानृतेऽस्फुरणेऽसुखे पुरुषार्थतेति तदात्मता ।
वारणीयविधाप्रकल्पितभेदलब्धपदैः पदैर्नैकरस्य हतिस्तथैव हि साधुपूर्वमवादिषम् ॥ २८ ॥

अमुष्य ब्रह्मणः सत्यज्ञानानन्तानन्दरूपम् स्वरूपलक्षणम् यतः सत्याऽपरोक्षसुखाभिन्ने वस्तुनि पुरुषार्थता पुरुषाभिलाषविषयता न

भवति इतिहेतोः ब्रह्मणः तदात्मता सत्यज्ञानादिस्वरूपता श्रुत्योच्यते सत्यादिपदानिलक्ष्ये स्वस्वविरुद्धानृतत्वादिनिषेधमुखेनापि पर्यवसन्नानीति भावः सत्याद्यनेकविधत्वे एकरसत्वहानिशङ्कायामाह वारणीयाः निषेधनीयाः याः विधाः प्रकाराः असत्यत्वादयः ताभिर्हेतुभिर्निषेध्येषु कल्पितभेदैः लब्धावकाशैः सत्यादिपदैः एकरसत्वस्य हानिः न हि यतः उक्तप्रकारेणैव सम्यक् चतुर्दशश्लोके उक्तम् ॥ २८ ॥

युक्त्या सत्यत्वं साधयति, सत्यत्वमिति—

स्रग्धरा

सत्यत्वं तस्य सौक्ष्म्यान्नभस इव जगन्नीलिमाधारभावादव्यावृत्तेरवृत्तेरखिलदृशितया सर्वबाधावधित्वात् । निस्स-

ङ्गत्वाविरोधात्सकलगततया-
त्मत्वतःसाक्षिभावादन्यद्रष्टु-
र्निषेधात्स्फुटवचनशतैः स्वा-
नुभूत्या च सिद्धम् ॥ २६ ॥

तस्य ब्रह्मणः सत्यत्वम् सिद्धम् कस्मात् सूक्ष्मत्वात् कारणत्ववत्सूक्ष्मत्वस्य तत्रैव विश्रान्तेः पुनः यथा नभः मिथ्यानीलत्वाधारत्वात्सत्यम् तथा जगद्रूपनीलत्वाधिष्ठानत्वात् पुनः परस्परव्यावृत्तसर्वेषु ब्रह्मणो व्यावृत्त्यभावात् अनुवृत्तेरिति यावत् पुनः अवृत्तेः कुत्रचिदवृत्तेः आधेयतारहितत्वात् पुनः सर्ववस्तुबोधरूपतया पुनः अनवस्थाभिया यत्सर्वबाधाबाधि तदेव ब्रह्मेति तत्त्वादपि पुनः निस्सङ्गत्वस्य ब्रह्मगतस्य सत्यत्वेनाविरोधात् पुनः सर्वगतया नानित्यं सर्वगम्भवतीति पुनः आत्मत्वात् सर्वस्य कालादेः पुनः सा-

T

क्षित्वात् अनवस्थाभिया साक्ष्यन्तराभावादसाक्षिकब्रह्माभावासिद्धेरिति भावः पुनः श्रुत्या ब्रह्मान्यद्रष्टृनिषेधात् द्रष्टुरभावेजगदान्ध्यप्रसङ्गात् पुनः व्यक्तवचनशतैः सत्यपदघटितश्रुतिभिः च पुनः तत्त्वविदनुभवेन ॥

चिद्रूपत्वं ब्रह्मणः साधयत्यात्मत्वादिति—

आत्मत्वादीक्षितृत्वादखिलवशितया शास्त्रयोनित्ववादात्कामाभिध्योपदेशाच्छशितपनमुखद्योतिभारूपतोक्तेः ।
साक्षादेवापरोक्षादसुकृतसुकृताध्यक्षसाक्षित्ववादात्सर्वज्ञज्ञादिशब्दात्स्फुटवचनशतैश्चापि सच्चित्स्वभावम् ॥ ३० ॥

T

सद्ब्रह्म चित्स्वभावम् कस्मात् श्रुतिषु ब्र्-ह्मण्यात्मत्वोक्तेः पुनः ईक्षितृत्वोक्तेः तदैक्षते-त्यादौ पुनः सर्वस्य स्वाधीनीकरणशीलत्वात् तथा चोक्तम् एतस्यैवाक्षरस्येत्यादि पुनः उप-निषदेकगम्यत्वकथनात् पुनः क्वचित् स्रष्ट-व्यरूपकामविषयकजननसंकल्परूपध्यानोप-देशात् पुनः चन्द्रसूर्यप्रधानकानामग्न्यादीनां प्रकाशनस्वभावकप्रकाशरूपत्वकथनात् पुनः अन्यानपेक्षप्रत्यक्षरूपत्वात् पुनः पापपुण्ययोः प्रेरकत्वस्य साक्षाद् द्रष्टृत्वस्य चोक्तेः कर्मा-ध्यक्षः एष ह्येवासाधुकर्मकारयतीत्यादिना पुनः ब्रह्मणिज्ञसर्वज्ञादिशब्दात् ज्ञः काल-कालोगुणीत्यादौ पुनः चिन्मात्रोहं सदाशिवः चैतन्यमात्मनो रूपम् इत्यादि साक्षाच्चेतन-शब्दवद्वचनैरपि ॥ ३० ॥

आनन्दरूपतां निरूपयंति, सौख्येति—

**सौख्योत्कर्षावधित्वान्निखि-**

T

लसुखकणाम्भोनिधित्वश्रुति-
भ्यो मुक्तप्राप्यत्ववादान्निरव-
धिपरमानन्दभूमात्मकत्वात्।
सर्वप्रत्यक्त्ववादान्निधिनिल-
यवधूसाम्यवादात्सुषुप्तावानन्दे
ब्रह्मतोक्तेरपि च रसतया त-
त्सदानंन्दरूपम् ॥ ३१ ॥

तत् ब्रह्म सदा आनन्दरूपम् कस्मात् आनत्वाधिक्यस्यावसानभूमित्वात् उक्तः च सौख्योत्कर्षोमनुष्यसुखमारभ्य श्रुतौ पुनः सर्वसुखकणानां समुद्रतुल्यत्वपरैतस्यैवानन्दस्येत्यादिश्रुतिभ्यः पुनः मुक्तैः प्राप्यत्वस्य कथनात् न ह्यनानन्दत्वे मुमुक्षा स्यात् पुनः निरतिशयानन्दानन्तरूपत्वात् अल्पे सुखत्वस्य निषेधादिति भावः पुनः प-

T

रत्प्रेमास्पदत्वे न प्रसिद्धो यः सर्वप्रत्यगात्मा तद्रूपत्वस्य कथनाद्ब्रह्मणः पुनः भूच्छन्ननिधिपक्षिनीड़कामिनीभिः तुल्यतोक्तेः यथोपरिदेशेचरन्तोपि न निधिं जानन्ति धावन्ति पक्षिणश्च सायं सुखाय नीड़म् तद्वज्जीवाः सुप्तौ ब्रह्म यथा कामिन्या संगतो न जानाति किंचित्तथा सुप्तौ ब्रह्मणेति पुनः स एष ब्रह्मलोक इति सौषुप्ते प्रकृतानन्दब्रह्मभावोक्तेः पुनः रसत्वादपि च आनन्दकररसत्वोक्तेश्च ॥ ३१ ॥

अथोक्तब्रह्मलक्षणं जीवात्मनि
दर्शयति, सच्चिदिति—

सच्चित्सौख्यैकरस्यं निगदितमिह यद्ब्रह्मणो लक्षणं तत्सत्यक्तत्वेपि जैवेसममखिलदृशस्तस्य बाधाद्ययोगात् । मु-

ख्यप्रेमास्पदत्वादुपधिविभिद-
या वस्तुभेदाद्यसिद्धेर्ब्रह्मांश-
त्वप्रवादात्तनुकरणदृशः स्वप्र-
काशत्वतश्च ॥ ३२ ॥

अत्र ग्रन्थे सच्चित्सौख्यैकरस्यं यद्ब्रह्मणो लक्षणमुक्तम् तत् जीवसम्बन्धिनि सर्वान्तरसर्वसाक्षिप्रत्यगान्यपि तुल्यम् कुतः सर्वावस्थासाक्षिणस्तस्य वाधविकारादेर्वक्तुमशक्यत्वात् साक्षिवाधे जगदान्ध्यप्रसङ्गात् असाक्षिकवाधासिद्धेश्च पुनः अनन्यार्थप्रेमास्पदत्वात् पुनः अज्ञानतत्कार्यदेहादिभेदेनात्मवस्तुनो भेदानित्यत्वादीनामसिद्धेः पुनः यथाग्नेः क्षुद्रा विस्फुलिङ्गा इत्यादिना ब्रह्मांशत्वस्य कथनात् पुनः देहेन्द्रियद्रष्टुः स्वप्रकाशत्वादपि नहीन्द्रियसाक्षी जड़ेन परेण वा केनचिद्भास्य इतिभावः ॥ ३२ ॥

उक्तमेवात्मसत्यत्वं पुनर्दार्ढ्या-
याह, स्वाप्नार्थैरिति—

स्वाप्नार्थैर्बाध्यमानैरयमपि
सह यद्बाध्यमानो न दृष्टो बा-
धद्रष्टा स्वयं सन्कथमिव कल-
येदात्मबाधं दृगात्मा । दृग्भेदे
यन्नमानं यदपि न च समा
दृग्दृशोर्गोचरो वा यच्चासौ नि-
र्विकारस्तदयमनवधिः प्रत्य-
गात्मा सदात्मा ॥ ३३ ॥

यत् यस्मात् जाग्रदवस्थायां बाध्यमानैः स्वाप्नपदार्थैः सह प्रत्यगात्मापि तथा न दृष्टः किंच दृगात्मा दृग्रूपः स्वयं बाधद्रष्टा सन् आत्मबाधं कथमिव जानीयात् यतो न स्वा-

भावं कोपि प्रत्यक्षयाति पुनः यत् यस्मात् दृग्भेदे दृगन्तरे मानं नास्ति प्रत्युत तन्निषेधेनान्योतोस्ति द्रष्टेत्याद्यस्ति तत् तथाचान्येनापि न दृगात्मबाधज्ञानम् अपिच सत्यपि दृगन्तरे दृक्त्वेन तुल्या दृक् अतः दृशोः दृगन्तरस्य विषयो वा यत् यस्मात् न स्यात् नहि समानप्रदीपयोर्विषयविषयिभावो दृष्टः पुनः यस्मात् असावात्मा निर्विकारः बालत्वजाग्रत्त्वादिसर्वधर्मशून्यः तत्तस्मात् अपरिच्छिन्नः अयम् प्रत्यगात्मा सदात्मा सत्यस्वरूपः ॥ ३३ ॥

एवं चिद्रूपतामाह, यदिति—

यद्बाल्यादिष्ववस्थास्वहमहमिति भात्येकरूपो विभिन्नास्वध्यक्षं जाग्रदर्थानिव निजमहसा यच्च सुप्तोपि वेत्ति ।

यच्चाहङ्कारमोषेप्यपरिमुषित-
चित् सुप्तिसौख्यादिसाक्षी द्र-
ष्टुर्दृष्टेरलोपे श्रुतिरपि तदसौ
प्रत्यगात्मा दृगात्मा ॥३४॥

तत् तस्मात् असौ प्रत्यगात्मा दृगात्मा ज्ञानरूपः तस्मात् कस्मात् यस्मात् भिन्नासु अवस्थासु एकरूपः स्फुरति कथम् स एवाहम् सएवाहमिति पुनः यस्मात् सुप्तोपि लीनेन्द्रियोपि सन् स्वरूपप्रकाशेन जाग्रत्पदार्थान् इव अध्यक्षम् प्रत्यक्षम् वेत्ति मनोमयानपि पुनः यस्मात् अहङ्कारस्य लयेपि अनष्टचिद्रूपः सुषुप्तेः तत्सुखाज्ञानयोश्चसाक्षी यस्माच्च द्रष्टुः दृष्टेः स्वरूपभूतज्ञानस्य नित्यत्वे श्रुतिरप्यास्ति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते इति ॥ ३४ ॥

T

अथानन्दरूपतां द्रढयति, यच्चेति—

यच्चात्मान्यद्ब्रुवाणं प्रियमि-
ति तव तद्रोत्स्यतीति ब्रवीति
प्राज्ञेनैक्यं सुषुप्तौ निगदति च
यदानन्दसंविन्मयेन । इच्छा-
यत्स्वानुकूले त्रिजगति विदि-
ता स्वप्रतीपे जिहासा यच्च
स्यां सर्वदेति स्पृहयति तदसौ
प्रत्यगात्मा सुखात्मा ॥३५॥

यस्मादपि आत्मनोन्यद्वस्तुप्रियम् इति वदन्तं प्रति तदात्मभिन्नं वस्तु तव रोत्स्यति नङ्क्ष्यति स्ववियोगेन त्वां रोदयिष्यतीति वावदति श्रुतिः यस्माच्च सुषुप्तौ आनन्दरूपज्ञानप्रचुरेण प्राज्ञेन ईश्वरेण सहैकतामात्म-

नो वदति श्रुतिः पुनः यस्मात् त्रिजगति लोकत्रयस्थप्राणिषु स्वोपकारके वस्तुनि इच्छा रागः तथा स्वानुपकारके त्यागेच्छा द्वेषः प्रसिद्धा यस्माच्च सर्वदाहं स्याम् ममाभावो मा भवतु कदापीति यावत् इति एवम् सर्वोऽप्यात्मानं वाञ्छति तस्मात्कारणादसौ प्रत्यगात्मा आनन्दस्वरूपः ॥ ३५ ॥

उक्ताखिलनिर्णयेन महावाक्याखण्डार्थनिश्चयो भवतीत्याहेत्थमिति—

इत्थंमीमांसमाने श्रुतिगुरुवचनैर्युक्तिभिश्चानुभूत्या शश्वज्जीवेशतत्त्वे निपुणमधिगते वस्तुतो लक्षणैक्ये। निष्प्रत्यूहं निजार्थं समधिगमयितुं तत्त्वमस्यादिवाक्यान्याद्यन्तावेक्ष-

T

णाद्यैरधिगतहृदयान्यञ्जसैव क्षमन्ते ॥ ३६ ॥

उक्तरीत्या वेदगुरुवाक्ययुक्तिनिजानुभवैर्निरन्तरं विचार्यमाणे जीवेश्वरस्वरूपे वस्तुतः स्वरूपलक्षणैकत्वे दृढं यथास्यात्तथा निश्चिते सति तत्त्वमस्यादिमहावाक्यानि शीघ्रमेव निर्विघ्नं यथास्यात्तथा अखण्डप्रत्यगभिन्नचिद्रूपरूपनिजार्थं सम्यक् निश्चाययितुम् क्षमन्ते समर्थानि भवन्ति कीदृशानि उपक्रमोपसंहारविचारणाद्यैर्निश्चिताभिप्रायाणि ॥ ३६ ॥

अथ तत्त्वमसीत्यत्र पदार्थमाह,
प्राक्सर्गादिति—

प्राक्सर्गाद्यत्सदासीदसृजदथ च यत्तेज आदिप्रविष्टं जी-

वस्तस्मिन्यदासीद्यदखिलमनृतं नामरूपं वितेने । तत्सत्तच्छब्दवेद्यं त्वमिति निगदितः श्वेतकेत्वाख्यजीवो वाक्यार्थं नित्यसिद्धं गमयदसिपदं वर्तमानं ब्रवीति ॥ ३७ ॥

सृष्टेः पूर्वं यत् सद्वस्तु आसीत् अथ अनन्तरम् यत् अग्न्यादि असृजत् पुनः तस्मिन्स्वसृष्टे प्रविष्टं सत् यत् जीवः आसीत् ततः ब्रह्मादिजीवरूपेण यत् मिथ्यात्मकसर्वनामरूपविस्तारं चक्रे तत्सत् तत्त्वमसीत्यत्र तच्छब्देन ज्ञेयम् तच्छब्दस्यार्थ इति यावत् पुत्रं प्रति पितारुणिरुवाच तत्त्वमसीत्यतः त्वमितित्वमित्यनेन पदेन श्वेतकेतुनामकजीव उक्तः असि पदं तु नित्यसिद्धं वा-

T

क्यार्थं बोधयत् वर्तमानमर्थं कथयति वा-
क्यार्थवर्तमानसत्तासि पदार्थः ॥ ३७ ॥

पदार्थान्वयप्रकारं दर्शयति, बाधेति—

बाधाध्यासविशेषणैक्यवि-
षयं नाम्नोश्चतुर्द्धा मतं सामा-
नाधिकरण्यमाद्यमिह नव्यर्थो
द्यमास्यात् श्रुतिः । ध्याना-
द्यश्रवणादनित्यफलतादोषाच्च
नाध्यासधीस्तादात्म्यं न वि-
रुद्धयोरिति बलाद्धस्त्यैक्यपक्ष-
स्थितिः ॥ ३८ ॥

समानविभक्तिकनाम्नोः सामानाधिकरण्य-
म् एकार्थप्रतिपादकत्वम् अभेदान्वय इति या-
वत् चतुर्विधं मतम् कीदृशम् बाधाध्यासवि-

शेषणैक्यविषयम् तत्र वाधोनामानृतज्ञानस्य यथार्थज्ञानेन निवृत्तिः यथा अन्धकारे स्थाणौ पुरुषोयामिति ज्ञानस्य पुरुषोऽयं स्थाणुरिति निश्चितज्ञानेन एतदेव वाधविषयकं सामानाधिकरण्यम् शुक्त्यादाविदं रजतमित्यादि द्वितीयम् दण्डीपुरुष इत्यादि तृतीयम् प्रकृष्टप्रकाशश्चन्द्रः सोयं देवदत्त इत्याद्यैक्यविषयम् इह तत्त्वमसीति वाक्ये आद्यम् न यतः श्रुतिः व्यर्थोद्यमा स्यात् मोक्षायोपायोपदेशोद्यमा हि श्रुतिः ब्रह्मणो वाधे मोक्षस्यैव वाधात् जीवस्य वाधे मुमुक्ष्वभावेन मोक्षवाधाद्व्यर्थोद्द्यमा स्यात् पुनः अध्यासधीरप्यत्र न कुतः मनो ब्रह्मेत्युपासीतेत्यादिवत् ब्रह्मत्वध्यानादिविधेरश्रवणात् सत्यपि क्वचिच्छ्रवणे अनित्यफलतादोषादपि ध्यानं च मानसी क्रियासाचानित्यफलिकेति तथात्र विरुद्धयोस्तत्त्वं पदार्थयोः तादात्म्यं विशेष्यविशेषणभावो न इति हेतोः एकवस्तुविषयक-

सामानाधिकरण्यपक्षस्यात्र वलात् स्थितिः सिद्धा ॥ ३८ ॥

अथात्र वाच्यार्थयोरेकत्वासम्भवेनैकत्वरूपवाक्यार्थं लक्षणया संभावयति, त्रिभिः—

मञ्जुभाषिणी।

अभिधेयमत्रपदयोरसङ्गतं न विरुद्धधर्मियुगमैक्यमेति यत् । उपयोगमूलघटनाद्ययोगतो न परस्परार्थघटितेपि-लक्षणा ॥ ३९ ॥

अत्र वाक्ये तत्त्वंपदयोः अभिधेयम् वाच्योर्थः असङ्गतम् परस्परानन्वयि कुतः यत् यतः विरुद्धधर्मयुतवस्तुद्वयम् एकतामभेदं न प्राप्नोति यष्टिपदस्य यष्टिधरे इव लक्षणापि परस्परार्थयुक्ते न संभवति तथा हि ज-

गत्कारणत्वरूपतत्पदार्थविशिष्टे जीवे लक्षणया जगत्कारणवाँस्त्वमिति वाक्यार्थः स्यात् एवं त्वंपदार्थविशिष्टतत्पदार्थेपि बोध्यम् न चैवं संभवति कुतः एतादृशोपदेशस्य मोक्षे उपयोगायोगात् तथा मूलघटनादेः उपक्रमसंगत्यादेश्चायोगात् ॥ ३९ ॥

उक्ताजहत्स्वार्थापि न संभवतीत्याह, न चेति—

न च गाङ्गतीरमिव वाच्यसङ्गि वा प्रथितं तृतीयमिह योग्यमन्वये । पदयोर्न चैकतरभागलक्षणा ध्यवसान लिङ्गमुपपद्यतेपि वा ॥ ४० ॥

गङ्गायां घोष इति वाक्येन्वययोग्यं गङ्गार्थप्रवाहयोगितृतीयपदार्थतीरमिवेह महावाक्येन्वययोग्यमन्यतरपदार्थसङ्गि तृतीयं वस्तु

किमपि न प्रथितं न प्रसिद्धमस्ति तथा पदयोः तत्त्वंपदयोर्मध्ये कस्यचिदेकपदस्य जहदजहत्स्वार्थारूपभागलक्षणाया निश्चयेपि न लिङ्गम् न किञ्चिद्विनिगमकमस्ति न वा उपपद्यतेपि अन्यतरभागलक्षणा निर्विशेषाखण्डवाक्यार्थतात्पर्यस्य निर्णीतस्य कथमप्यलाभादिति भावः ॥ ४० ॥

नन्वस्तुतत्पदं गौण्यावृत्त्या तत्सदृशपरम् तथाच ब्रह्मसदृशोसि त्वमिति वाक्यार्थोपीत्याशङ्कामपनुदन्पदयोर्भागलक्षणामङ्गीकरोति, नत्विति—

न तु मानसिद्धमपरं परोपमं निजरूपमस्य न च भाविनोस्तिता । श्रुतहानिरश्रुतगतिश्च नोचिते त्युचिताद्द्वयोरपि हि भागलक्षणा ॥४१॥

अस्य जीवस्य परोपमम् ईश्वरसदृशम् प्रसिद्धरूपादन्यत् निजरूपम् तु न केनचिदपि मानेन सिद्धम् येन त्वं तत्सदृशोसीत्यर्थः स्यात् प्रसिद्धरूपत्वसदृशमेवेति भावः मुक्तिसमये तत्सदृशरूपं स्यादित्यपि न यतः भाविनः अस्तिता वर्तमानता न च भवतिभवति चात्र वर्तमानार्थकमसिपदमिति किंचोक्तरीत्या श्रुतस्य तत्पदेन प्रतीतस्य ब्रह्मणः असिपदेन वर्तमानस्य त्यागः अश्रुतस्य च कालान्तरभाविरूपान्तरस्य कल्पना नोचिता इतिहेतोः द्वयोरपि तत्त्वं पदयोः भागलक्षणैवोचिता ॥ ४१ ॥

उचितलक्षणां समन्वाययति, अपहायेति–

**अपहाय धर्मनिचयं विरोधिनं तनुबुद्धिसाक्षिसदनन्तचिद्घनम् । उपलक्ष्य सोयमिति**

T

**वाक्यवत्ततो घटयेदखण्डविष-येपदद्वयम् ॥ ४२ ॥**

यथा सोयं देवदत्त इति वाक्ये तदिदं पदार्थयोः प्रतीताभेदे विरुद्धे तत्तद्देशकालादिविशेषणमुपेक्ष्य देवदत्तव्यक्तिमात्रं पदाभ्यां संलक्ष्य तद्रूपवाक्यार्थेऽभिन्ने वाक्यात्मकतादिदं पदद्वयं वोधकतया नीयते तथा तत्त्वं पदार्थयोर्निश्चिताभेदविरोधिनम् मायाऽविद्या तत्कृतसर्वज्ञत्वाल्पज्ञत्वादि धर्मसमूहम् अपहाय त्यक्त्वा शरीरबुद्धिसाक्षिचिन्मात्रम् भागं त्वंपदेन सदपरिच्छिन्नचिन्मूर्तिभागं तत्पदेन उपलक्ष्य ततः अनन्तरम् लक्षितैकचिन्मात्राखण्डवाक्यार्थविषये वाक्यात्मकपदद्वयं घटयेत्॥

एवमेकार्थत्वे पदयोरन्यतरस्य वैयर्थ्यमाशङ्क्याह, परोक्षेति—

**परोक्षानवाप्तत्वबुद्धिं परस्मि-**

T

**नपूर्णत्वदुःखित्वमोहं प्रतीचि। निहन्तुं निजालौकिकं चात्मतत्त्वं पदे वक्तुमन्योन्यतः साभिलाषे ॥ ४३ ॥**

परस्मिन् तत्पदलक्ष्ये श्रोतुरुत्पन्नाम् परोक्षत्वालब्धत्वबुद्धिम् निहन्तुम् त्वंपदमपेक्ष्यते त्वंपदलक्ष्यं त्वात्मरूपत्वात्सदैवापरोक्षं लब्धं च एवम् प्रतीचि त्वंपदलक्ष्ये प्रतीतम् अपूर्णत्वदुःखित्वरूपभ्रमम् निहन्तुं तत्पदमपेक्ष्यते तत्पदलक्ष्यं च पूर्णत्वादुःखित्वेन कस्याप्यतोषः तथा च परस्परलक्ष्याभेदविधयोक्तफलाय अतएवालौकिकनिजात्मस्वरूपं वक्तुं च तत्त्वं पदे परस्परं सापेक्षे नातो वैयर्थ्यमितिभावः ॥ ४३ ॥

अखण्डत्वं निरूपयति, असंसर्गीति—

**असंसर्गिसत्यार्थता स्यात्प-**

T

दानामनन्यार्थतावाप्यखण्डा-
र्थतात्र। प्रसिद्धा ह्यसौ चन्द्रमा-
त्र प्रबोधात्प्रकृष्टः प्रकाशः श-
शीत्यादि वाक्ये ॥ ४४ ॥

अत्र पदानामखण्डार्थकत्वम् सर्वथान्यसं-
सर्गशून्यनित्यवस्त्वर्थकत्वम् अथवा जाति-
गुणाद्यन्याघटितवस्त्वर्थकत्वमपि स्यात् हि
यतः असौ उक्तविधाखण्डार्थता प्रकृष्टः प्र-
काशः चन्द्रः इत्यादिवाक्ये प्रसिद्धा कस्मा-
त् प्रश्नयितृजिज्ञासाया उत्तरयितृतात्पर्य-
स्य चानुरोधेन चन्द्रमात्रस्यैव बोधात् प्रकृ-
तवाक्यत इतिशेषः ॥ ४४ ॥

चन्द्रमात्रबोधकत्वमुक्तवाक्यस्य व्युत्पा-
दयति, प्रकर्षेति—

प्रकर्षप्रकाशत्वचन्द्रत्वयो-

T.

गव्यवच्छेदभेदादयो नैव पृष्टाः। न वा शाब्दधीरस्त्यजिज्ञासितेर्थे ततो वाक्यतश्चन्द्रमात्रप्रबोधः ॥ ४५ ॥

प्रकृष्टः प्रकाशश्चन्द्र इतिवाक्यस्य पदत्रयप्रवृत्तिनिमित्तानाम् प्रकर्षप्रकाशत्वचन्द्रत्वानाम् चन्द्रे योगः संसर्गः उक्तधर्मान्यधर्माणाम् व्यवच्छेदः असंसर्गश्चन्द्रे तथा चन्द्रनिष्ठोन्यभेदश्च नैव पृष्टाः यतो न जिज्ञासिताः अजिज्ञासिते चार्थे शाब्दबोधो नैव जायते तस्मादुक्तवाक्याच्चन्द्रमात्रस्यैव बोध इत्यर्थः भावस्तु प्रकृष्टनिकृष्टादिज्योतिस्समूहमालोक्यात्र कश्चन्द्र इतिप्रश्नेन चन्द्रव्यक्तिमात्रं ज्ञातुमिष्टं भाति अतस्तदेव प्रश्नविषयः इतिप्रश्नविषयमाकलय्य जिज्ञासानिवृत्तये जिज्ञास्यमात्रबोधनतात्पर्येण प्रवृ-

त्तोत्तरयितुर्वाक्येनापि प्रश्नविषयविषयकेनैव भाव्यमिति ॥ ४५ ॥

एवमृग्वेदगतप्रज्ञानं ब्रह्मेति महावाक्यस्याखण्डार्थत्वं विशदयति, य इति–

वसन्ततिलका

यः प्राग्विसृज्य भुवनं तनुमाविवेश यः पञ्चभूतसुरमानुषतिर्यगात्मा । येनावलोकयति वक्त्यभिमन्यते च प्रज्ञानमात्रविभवोऽहमसौ परात्मा ॥ ४६ ॥

यः परमात्मा प्राक् सर्गादौ भुवनं विसृज्य साङ्गलोकमुत्पाद्य तनुम् आविवेश सर्वान्तःकरणे प्रतिविम्बितः पुनः यः परमात्मा पञ्चभूतदेवमनुष्यपश्वादिरूपः ब्रह्मविवर्तत्वा-

दाकाशादीनाम् पुनः येन प्रत्यक्चैतन्येन निमित्तमात्रेणेन्द्रियान्तःकरणैः दर्शनवचनाभिमाना भवन्ति स्वरूपज्ञानमात्रैश्वर्यकः अहम् असौ परमात्मा न परमात्मनाभिन्नइत्येकचिद्रूपाखण्डार्थत्वमितिभावः अत्र प्रथमपादेन वाच्यार्थौ ततः पादाभ्यां क्रमेण ब्रह्मप्रज्ञानपदलक्ष्यार्थौ चतुर्थेन वाक्यार्थश्च दर्शिताः ॥ ४६ ॥

यजुर्वेदगताहं ब्रह्मास्मीत्यस्य तथा-
त्वमाह, यदिति—

यद्व्याकृतं जगदभूत्तमसा न-
खाग्राद्यञ्च प्रविष्टतनुकृत्स्नम-
कृत्स्नमासीत् । प्रेयस्तदेव परमं
परमार्थतोहं ब्रह्मास्मि तद्विदि-
तवद्धितदेवसर्वम् ॥ ४७ ॥

यद्ब्रह्म तमसा तमः प्रधानमायया विविधाकारं जगदभूत् ततः पुनः यद्ब्रह्म कृत्स्नम् सर्वात्मकमपि नखाग्रपर्य्यन्तम् प्रविष्टतनु प्रविष्टशरीरकं सत् तमसाऽज्ञाऽनेन अकृत्स्नम् परिच्छिन्नम् संसारी आसीत् तस्मात् तदेव परमं ब्रह्म प्रेयः अतिशयेन प्रियम् प्रत्यगात्मस्वरूपम् अतः परमार्थतः वस्तुतः अहं ब्रह्मास्मि हियतः तद्ब्रह्मैव विदितवत् स्वात्मसाक्षात्कारं कृतवत् मुमुक्षुतापि ब्रह्मण एवेति भावः एतदपि कुतः यतः ब्रह्मैव सर्वम् अत्र पूर्वार्द्धेन वाच्यार्थौ कृत्स्नमितिपदेन लक्ष्यार्थोपि सूचितः उत्तरार्द्धेन वाक्यार्थ इति विवेकः ॥४७॥

क्वचित्तु ब्रह्मात्मनोरैक्यं स्फुटमेवेत्याह, यश्चेति—

यश्चायमत्र पुरुषे प्रथते गुहान्तर्यश्चाप्रमेयसुखभूः सवि-

T

तुश्च बिम्बे । एकस्स इत्यभि-
दधुः स्फुटमैक्यमेके तद्वेदना-
च्च विलयं जगतश्च तत्र॥४८॥

अत्र पुरुषे पञ्चकोशगुहामध्ये योयमात्मा साक्षिरूपेण प्रकाशते यश्च सूर्यमण्डले अनन्तानन्दघनः परमात्मा प्रथते स एकः इति स्फुटमेवैक्यम् एके तैत्तिरीया अभिदधुः पुनः तद्वेदनात् एकात्मसाक्षात्कारात् तत्रात्मन्येव जगतो विलयम् चाभिदधुः तेनाप्यैक्यदार्ढ्यमेवेति भावः ॥ ४८ ॥

अथ सिंहावलोकनेन सामवेदगतनववारोपदिष्टतत्त्वमसीति महावाक्यं तात्पर्योद्भावनेन विशदयति, दशभिः—

आसीत्सदेव हिभवानन्तं वि-
धाय तेजोमुखं तदभिमत्य

T

बभूव जीवः । देहान्तशुङ्गम-
वधूय विलोकय स्वं सद्ब्रह्म त-
त्त्वमसि बोधसुखाद्वितीयम् ॥

हे श्वेतकेतो सृष्टेः पुरा भवान् सदेवासी-
त् ततः अनृतम् शुक्तिरजतवन्मिथ्यैव तेजः
प्रभृति भूतम् उत्पाद्य तद्रूपशरीरादि अभि-
मत्य आत्मत्वेन स्वीकृत्य जीवो बभूव भवा-
न् तस्माद्देहपर्यन्तम् शुङ्गम् अङ्कुरम् का-
र्यजातम् अवधूय मिथ्यात्वेन तिरस्कृत्य
स्वम् परमार्थनिजस्वरूपम् पश्य चिदानन्दा-
द्वयम् यत् सद्रूपं ब्रह्म तत् त्वम् असि इति
प्रथम उपदेशः ॥ ४९ ॥

एवं च किमिति निजसद्रूपताया अप्र-
तीतिरित्यत आह, संपद्येति—

संपद्य यत्र मधुनीवरसाः सु-

षुप्तौ सौख्यैकरस्यमधिगम्य जना न विद्युः । यत्प्रच्युताः पुनरमी वहुदुःखभाजः सद्ब्रह्म तत्त्वमसि नासि कदापि दुःखी ॥ ५० ॥

जनाः प्रतिदिनम् सुषुप्तौ मधुनि नानापुष्परसा इव यत्र सद्रूपे संपद्य सम्यग्गत्वा सद्रूपसुखभावेन एकरसताम् समानस्वभावताम् ऐक्यमितियावत् प्राप्यापि स्वस्य सुखत्वं न जानन्ति मूलाज्ञानस्य सत्त्वेन तमसि ज्ञातृज्ञेयादिभेदानां लयेनैकीभावादेव पुनः यस्मात्सद्रूपात्प्रच्युताः असद्रूपानुसन्धानयुताः सन्तः अमी जीवाः बहुदुःखिनो भवन्ति तत्सद्ब्रह्म त्वमसि दुःखी संसारी कदापि न असि अयं भावः सुप्तौ प्राप्तायामपि यो-

T

ग्यतायामज्ञानमात्रावृतेर्नात्मसाक्षात्कारः जाग्रत्स्वप्नयोस्त्वसङ्ख्याज्ञानकार्यावृतेरिति इति द्वितीयः ॥ ५० ॥

सतश्च्युता जाग्रदादौ सतश्च्युता इत्येवमपि न संस्मृतिं यान्तीति सदृष्टान्तमुक्त्वा स्मारयति, अब्धिरिति—

अब्धिर्यथा जलधरैरपनीय नीतो नद्यादिभावमुदधित्वमतिं जहौ स्वाम् । एवं भवानुपधिभिः खलु विस्मृतः स्वं सद्ब्रह्म तत्त्वमसि संस्मरपूर्णभावम् ॥ ५१ ॥

जलधरैर्मेघैरपनीय पृथक् कृत्वा नद्यादिभावं नीतोऽब्धिः यथा स्वामुदधिभावमतिं

तत्याज एवम् शरीराद्युपाधिभिः स्वम् निजसद्रूपम् भवान् विस्मृतः न स्मरति अतः तत्सद्ब्रह्म त्वमसीति निजपरिपूर्णभावमिदानीं त्वं संस्मर श्वेतकेतो इति तृतीयः॥ ५१ ॥

ननु सत उत्पत्तेस्तत्रैव लयाच्चानित्यादेहाद्या एव जीवाः सन्त्वविकारीत्यत आह, जीवेति—

जीवप्रहीणतरुशोषविशेषलिङ्गादात्मा परोस्ति तनुतः स च नित्य एकः। विद्ध्यैतदात्म्यमखिलं वितथद्द्वितीयं सद्ब्रह्म तत्त्वमसि मुञ्च विभेदमोहम् ॥ ५२ ॥

देहादात्मान्योस्ति कस्मात् जीवहीनवृक्ष-

स्य शोषविशेषरूपगमकात् यद्यदवयवेभ्यो-
पसरति जीवः शुष्यन्ति च तत्तदवयवा इति
वृक्षादेरन्यत्वावगमात् स चात्मा एकः तथा
नित्यः उत्पत्तिप्रलयौ तु देहाभिमानग्रहण-
परित्यागनिबन्धनौ न वस्तुत इति भावः
अखिलम् जगत् अनृतद्वितीयकः एष आ-
त्मैव इति त्वं विद्धि जानीहि इत्येकत्वनिर्वि-
कारित्वमिति भावः तस्मात् तत्सद्ब्रह्मत्वमसि
ततस्त्वम् भेदभ्रान्तिं त्यजेति चतुर्थः॥५२॥

ननु मिथ्यात्वं जगतो ब्रह्मोपादानकत्वेस्या-
त्तदेव न संभवति सूक्ष्मतमस्य स्थूल-
तमोपादानत्वादृष्टेरित्यत आह, धा-
नान्तरिति—

धानान्तरुन्नततरोरुवटः पु-
रेव यस्मिन्निदं जगदवस्थित-
माविरासीत् । श्रद्धावता सम-

**धिगम्य मणोरणीयः सद्ब्रह्म त-
त्त्वमसि सत्यमसत्यमन्यत् ॥**

उन्नततरोत्युच्चः उरुः स्थूलो वटः धानान्तः अत्यन्तसूक्ष्मवटवीजमध्यदेशे पूर्वं स्थितः आविर्भवति पश्चात् तद्वत् उत्पत्तेः पुरा इदं जगत् यस्मिन्नवस्थितं पुनराविरासीत् तत् श्रद्धालुज्ञेयं सूक्ष्मात्सूक्ष्मतमं सद्रूपं ब्रह्मत्व-मसि सत्यम् त्वदन्यत्त्वसत्यमिति पञ्चमः ॥

ननु ब्रह्म देहगमेव चेत्कुतो न गृह्यते
अयोग्यत्वादिति चेत्कृतं साधने-
नेत्यत आह, अप्स्विति—

**अप्सु प्रलीनमिव सैन्धव-
खिल्यमक्ष्णा पश्यन्ति यन्न
करणैरपि हृद्विभातम् । वि-**

न्दन्ति यद्रसनयेव रसं गुरू-
क्त्या सद्ब्रह्म तत्त्वमसि दृश्य-
मिदं तु नत्वम् ॥ ५४ ॥

यथा दर्शनयोग्यमपि लवणखण्डम् जले प्रलीनम् द्रवरूपतां गतम् चक्षुषा न पश्यन्ति तद्वत् हृदये साक्षिस्वप्रकाशतया विभातमपि यत् करणैर्न पश्यन्ति विवेकाभावादितिभावः यथा च जलस्थं रसं लवणं जिह्वया विन्दन्ति तद्वद् गुरूपदेशेन यत् विन्दन्ति तत्सद्ब्रह्म त्वमसि इदं दृश्यन्तु त्वम् न इति षष्ठः ॥ ५४ ॥

वन्धनिवर्तकः सद्गुरूपदेश एवेति
सदृष्टान्तमाह, चौरैरिति—

चौरैरिवासि पुरुषो विपिने
विसृष्टो रागादिभिस्तनुषु न-

T

द्धविशुद्धदृष्टिः । पान्थैरिवैष गुरुणासि विमुक्तवन्धः सद्ब्रह्म तत्त्वमसि याहि सुखं स्वधाम ॥

यथा कश्चित्पुरुषः चोरैर्वद्धदृष्टिः स्वदेशाद्दूरमानीयापहृतसर्वभूषणादिर्विजने वने विसृष्टस्त्यक्तः तद्वत् रागादिचौरैः स्वस्वरूपात्पृथक्कृत्य निरुद्धशुद्धस्वरूपदृष्टिरपहृतनित्यत्वानिर्मलत्वादि भूषो दुःखबहुलसहायशून्यनानायोनिशरीरवने त्वं विसृष्टोसि यथा चैष उक्तपुरुषो दैवागतैः पथिकैर्विमुक्ताखिलवन्धनस्तदुपदिष्टमार्गेण पृच्छन् सुखं स्वगृहं गतः तथा दैवादाप्तसद्गुरुणा विमुक्ताज्ञानादिवन्धोसि त्वम् यतस्तत्सद्ब्रह्मैव त्वमसि ततः सुखमपरिच्छिन्नानन्दं स्वस्वरूपं स्वयं शनैस्त्वं याहि प्राप्नुहीति सप्तमः ॥ ५५ ॥

T

नन्वज्ञानिन इव ज्ञानिनोपि मृतिक्रम इत्याशङ्क्यमृति समयाद्विशेषन्दर्शयति, संपद्येति—

संपद्य यत्र करणादिलयक्रमेण मूढो मृतः पुनरुपैति जनिप्रबन्धम् । प्राज्ञस्तु वञ्चयति मृत्युमुदस्तमोहः सद्ब्रह्म तत्त्वमसि निस्तरमृत्युबन्धम् ॥५६॥

मूढोऽनात्मज्ञः इन्द्रियादिलयक्रमेण इन्द्रियाणि मनसि तच्चप्राणे स च परमात्मनीति क्रमेण यस्मिन्प्राप्य मृतः पुनः जनिप्रबन्धम् जन्म परंपराम् जन्मरूपबन्धनम् जन्म तदाद्यनेककर्मबन्धनं चेति वा प्राप्नोति आत्मज्ञस्तु मूढवत् यत्र संपद्य मृत्युं वञ्चयति मरिष्यामीति न जानाति यतः पूर्वमेवनिवृ-

त्ताज्ञानः तत्सद्ब्रह्म त्वमसि ततः मृत्युरूपवन्धम् तद् भयं वा त्वं निस्तर उल्लङ्घय मास्पृश श्वेतकेतो इत्यष्टमः ॥ ५६ ॥

हेतुभूतसर्वव्यवहारसाम्येपि कथं न वध्यते विद्वानत आह, स्तेन इति—

स्तेनप्रतप्तपरशोरिव दाहवन्धावाप्नोति मूढमतिरप्यनृताभिसन्धः । सत्याभिसन्धिरथ न व्यथते यदात्मा सद्ब्रह्म तत्त्वमसि निर्णुद वन्धशङ्काम् ॥ ५७ ॥

यथा स्तेनः चोरः नाहं चोर इति मिथ्याभावनायुतश्चेत् परीक्षणाय प्रतप्तपरशुग्रहणे राजभटैर्नियुक्तः तस्मात्प्रतप्तपरशोर्दाहं ततो

T

बन्धनं च कारागारे प्राप्नोति तद्वदज्ञान्यपि अनात्मन्यात्मत्वानुसन्धानयुतत्वात् मृत्युपरशोः पीडादाहं पुनर्जननादिबन्धं च प्राप्नोति अथ यथा साधुश्चोरभ्रमेण गृहीतस्तथा नियुक्तोपि नाहं चोर इति सत्याभिसन्धिर्न व्यथते तद्वत् यदात्मा यत्सद्ब्रह्मरूपः ज्ञानी आत्मन्यात्मत्वानुसन्धानात्सत्याभिसान्धिमूढ़मतिवन्न व्यथते तत्सद्ब्रह्म त्वमसि ततो बन्धभ्रमं त्वं दूरीकुरु श्वेतकेतो इति नवमः ॥

प्रकृतमुपसंहरन् तात्पर्यमाह, पित्रेति—

पित्रासुतः सुवचनैरिति बोधितः स्वं सत्याद्वितीयसुखबोधघनं विजज्ञौ। एतद्विमृश्य विदिता द्वयहृक्परोपि स्वा-

राज्यसौख्यमधिगम्य भवेत्कृतार्थः ॥ ५८ ॥

पित्रा इति उक्तप्रकारेण सुवचनैः बोधितः पुत्रः नित्यचिदानन्दैकस्वभावम् स्वम् आत्मानम् विजज्ञौ विशेषतः साक्षात् ज्ञातवान् एवम् परोपि अन्योपि एतत् उक्तं सकलोपनिषत्तात्पर्यम् विमृश्य विचार्य ज्ञाताद्वितीयचित्कः सन् स्वराट् स्वप्रकाशः तद्भावरूपसौख्यं प्राप्य कृतकृत्यो भवेत् ॥५८॥

अथाथर्वणवाण्याऽयमात्मा ब्रह्मेति महावाक्यस्याखण्डार्थत्वमाह, ऐक्यमिति—

ऐक्यं प्रकल्प्य प्रणवे खिलस्य पादान्विभज्य प्रविलाप्यशिष्टः। एकः स आत्मा ज-

**गदेऽयमात्मा ब्रह्मेति विस्प-**
**ष्टमथर्ववाण्या ॥ ५६ ॥**

अथर्ववाण्या माण्डूक्यश्रुत्या अयमात्मा ब्रह्मेति विस्पष्टम् स एक आत्मा जगदे उक्तः सः कः ओमित्येतदक्षरमिदं सर्वमित्युपक्रमे सर्वजगतः प्रणवे अभेदं प्रकल्प्य प्रणवपादान् पृथक् निरूप्य जगद्रूपान् त्रीन् पादान् चिद्ब्रह्मरूपलक्ष्यैर्द्धमात्रारूपतुरीयपादत्वेन क्लृप्ते क्रमेण प्रविलाप्य यः लक्ष्यचिद्रूपपादः शिष्टः शेषितः अत्र पादत्रयस्य वाच्यार्थत्वं तुरीयस्य लक्ष्यार्थत्वमिति विवेकः ॥ ५९ ॥

एवं चतुर्वेदोपनिषत्तात्पर्य सिद्धब्रह्मात्मैक्यस्योपयोगमाह, नित्यमिति—

**नित्यं शुद्धं विबुद्धं विकृति-**

T

विरहितं नित्यमुक्तस्वभावं सत्यं सूक्ष्मं निरस्तद्वयमनवयवं पूर्णमानन्दरूपम् । प्रत्यग्ब्रह्माहमस्मि स्वरसदृशि रवौ ध्वान्तवद्विश्वमेतन्नासीदस्ति भविष्यत्यपि मयि सुखसज्ज्योतिरात्मन्यसङ्गे ॥ ६० ॥

एकरसं निर्दोषं चेतनं षड्भावविकाररहितं सदामुक्तम् अवाध्यम् अस्थूलं द्वैतशून्यं निरवयवं व्यापि सुखरूपं सर्वान्तःकरणसाक्षिस्वरूपं ब्रह्म अहमस्मि अतः असङ्गे सर्वावस्थासम्बन्धरहिते आनन्दसच्चेतनस्वरूपे मयि एतद्विश्वं जगत् पुरा न आसीत् इदानीं नास्ति अग्रेपि न भविष्यति कस्मिन् किम्वत् स्वाभाविकप्रकाशरूपे सूर्येऽन्धकारवत् तथा-

T

चैक्यज्ञानेन सकलानर्थजगन्निवृत्तिनित्यपरमानन्दस्वरूपास्थितिरूपं फलमितिभावः ॥

नन्वेवमप्यैक्यज्ञानस्य सत्त्वान्नाद्वैतसिद्धिरत आह इत्थमिति—

इत्थं वाक्याद्विमृष्टादरणि-
विमथनाद्वह्निकीलेव सद्यः सं-
भूताखण्डवृत्तिस्तृणमिव नि-
खिलद्वैतजालं समोहम् । द-
ग्ध्वानिर्वाणसंज्ञे निरतिशय-
सुखेनित्यसिद्धात्मतत्त्वे सद्यो
याति प्रणाशं कतकरज इवो-
दस्य पङ्कं जलस्य ॥ ६१ ॥

अरण्योः काष्ठयोर्घर्षणादुत्पन्नाग्निज्वाला इव इत्थम् उक्तरीत्या विचारिताद्वाक्यात्

सद्यः तत्कालम् संभूता उत्पन्ना ब्रह्माकारा वृत्तिः अज्ञानसहितम् अशेषद्वैतसमूहं दग्ध्वा कैवल्यसंज्ञके परमसुखरूपे सनातने आत्मस्वरूपे सद्यः शीघ्रमेव प्रणाशं लयं प्राप्नोति यथोक्तवह्निज्वाला तृणं दग्ध्वा स्वयं शाम्यति तद्वत् यथा वा कतकवीजस्य रजः निर्मलीकरणाय जले क्षिप्तम् जलस्य पङ्कमुदस्य व्यापिपङ्कमेकत्रनीत्वा तेष्वेव लयं याति तद्वत्॥६१॥

ऐक्यसाक्षात्कारायोक्ताखण्डवृत्तेः माहात्म्यमाहैषेति—

एषा ऽनादित्रितापज्वरविषमभवव्याधिसम्यक् चिकित्सा ह्येषा स्वाराज्यसंपन्निरवधिपरमानंदसंदोहदोग्ध्री। भस्मीभूतं तथा स्यां प्रभवति न पुनः कर्मवीजं प्ररोढुं सन्देहग्रन्थि-

T

भेदावपि च निगदितावेतदा सादनेन ॥ ८२ ॥

यथा कफपित्तवातप्रकोपजज्वरो दुश्चिकित्स्यः तद्वत् आध्यात्मिकाधिदैविकाधिभौतिकत्रितापज्वरैर्विषमस्य दुश्चिकित्स्यस्य संसाररोगस्यानादेः एषा खण्डाकारवृत्तिः सम्यक् चिकित्सा अपनेत्री तथा स्वाराडिन्द्रः तद्भावरूपसंपदपि एषा तथा अपरिच्छिन्नपरमानन्दसमुद्रस्य प्रापिका तथास्यां ज्ञानाग्निज्वालायां भस्मीभूतं कर्मबीजम् प्ररोढुम् अङ्कुरान् जनयितुम् न समर्थं भवति तथा एतदासादनेन सफलैतद्वृत्तिप्राप्त्या सर्वसन्देहस्यानात्मतादात्म्याध्यासरूपाचिज्जडग्रन्थेश्च भेदावपि अत्यन्तनिवृत्ती अपि श्रुत्या कथितौ ॥ ८२ ॥

इत्यपवादप्रकरणं द्वितीयम् ।

ननुवेदान्तवाक्यविचारजाखण्डवृत्त्या अध्यारोपापवादनिरूपिताद्वितीयप्रत्यगभिन्नब्रह्मसाक्षात्कार उक्तो न घटते वाक्यस्यापरोक्षज्ञानजनकत्वाप्रसिद्धेरित्यत आहापरोक्षेति—

**अपरोक्षवस्तुविषयेतिशब्दजाप्यपरोक्षतां न विजहात्यखंडधीः । निपुणं निशम्य दशमस्त्वमित्यदो वचनं न हि स्वमुपलब्धुमिच्छति ॥ १ ॥**

शब्दजापि वाक्यजापि अखण्डधीः अखण्डाकारवृत्त्यात्मकं ज्ञानम् यतः स्वयं प्रकाशनित्यापरोक्षात्मवस्तुविषया इति हेतोः स्वस्य अपरोक्षतां न त्यजति नाऽपरोक्षविषयकं ज्ञानं परोक्षमिति युज्यते हि यतः दशाज्ञजनानां कश्चिद् गणो नदीमुत्तीर्य स्वाति-

रिक्तगणनयादशमो नद्यापहृत इति रुदन् तत्र ज्ञातहेतुकान्यपथिकेन प्रेरित एकः पूर्ववन्नवमगणनानन्तरमेव दशमस्त्वामित्युक्तः इदं वचनम् निपुणं यथास्यात्तथा श्रुत्वा पुनः स्वं दशमम् ज्ञातुं नेच्छति यत्नं न करोति यदिशब्दात्परोक्षमेव ज्ञानं भवेत्तर्हि स्वापरोक्षायोपायान्तरे प्रवर्तेतेति भावः ॥

उक्तमेव दृष्टान्तेनोपपादयति, न चेति—

न च शब्दजन्यमतिमात्रतः स्वतोप्यपरोक्षवस्तु भजते परोक्षताम् । न खलु प्रदीपतरणिप्रकाशयोः प्रतिभासतोस्ति विषये पृथग्विधा ॥ २ ॥

स्वतोपि स्वभावादेव अपरोक्षवस्तु आत्मा शब्दजन्यधीमात्रात् शब्दजन्यज्ञानविषय-

त्वापराधात् परोक्षताम् भजते इति न च युज्यते यतः दीपसूर्यप्रकाशयोः विषये घटादौ प्रकाशभेदहेतोः पृथग्विधा कश्चन भेदो न खलु भवति न हि घटोदीपालोके घटत्वेन भातो रविप्रकाशे पटत्वेन भाति रक्तो वा नीलः तस्माद्यथावस्तु प्रमाणानां भासकत्वमिति भावः ॥ २ ॥

अस्तु वा क्वचिद्विचित्रस्वभावाविषयभेदाद्-
ग्राहकसामग्रीभेदाद्वाभानभेदः अपरोक्षैक-
स्वभावात्मनिप्रमाणमूर्द्धन्यमहावाक्यस्य
परोक्षधीजनकत्वेच्युतिरेव प्रामाण्या-
त्स्यादित्याह,परोक्षेति—

अपरोक्षवस्तुविषयापरोक्ष-
धीर्न च मानभावमुपगन्तुम-
र्हति । स्वत एव शश्वदवभात-

मात्मनः कुशलोपि न स्वमपि गूहितुं क्षमः ॥ ३ ॥

अपरोक्षवस्तुविषयिणी परोक्षधीः मानभावम् प्रमाणत्वम् प्राप्तुम् न चार्हति तदभाववति तत्प्रकारकत्वादयथार्थज्ञानं स्यादिति भावः किंच प्रवीणोपि स्वतः सदा भासमानम् स्वम् आत्मानम् आत्मनो गूहितुम् गोपयितुम् न क्षमः मातुर्निलीयते कृष्ण इति वदात्मन इति पञ्चमी आत्मानं प्रतीत्यर्थः ॥ ३ ॥

नन्वपरोक्षज्ञानस्येन्द्रियकरणकत्वनियमान्नानिन्द्रियवाक्यादुक्तापरोक्षज्ञानमित्यत आह, सुखेति—

सुखदुःखरागयतनेष्वसंमतेस्तिमिरप्रसुप्तिविषयेष्वदर्शना-

तु। अपि हेतुरस्य विषयस्य योग्यतेत्यपरोक्षता न करणै- र्नियम्यते ॥ ४ ॥

करणैरिन्द्रियैः अपरोक्षता न नियम्यते कुतः सुखदुःखेच्छा यत्नेषु इन्द्रियवेद्यत्वस्य वेदान्तिनो(संमतेः मनोधर्मत्वेन साक्षिवेद्यत्वात्तेषाम् इतिभावः तथा अन्धकारे स्वप्नपदार्थेषु चेन्द्रियवेद्यत्वादर्शनात् अन्धकारस्य भावरूपत्वे आलोकासहकृतचक्षुर्ग्राह्यतानस्यादित्यभावत्वे निस्तत्त्वे इन्द्रियातिसंवन्धायोग्यत्वान्नेन्द्रियवेद्यता स्वाप्ने तु सकलेन्द्रियलयादिति विवेकः तथा अस्यापरोक्षज्ञानस्य विषययोग्यतापि हेतुः इति हेतोश्च सदपि गुरुत्वादिरूपवच्चक्षुषा न गृह्यते यतोत इतिभावः॥

T

यद्यप्यात्मवद्ब्रह्मनापरोक्षम् तद्विषयकाज्ञानस्य सर्वानुभवसिद्धत्वात्तथापि महावाक्योत्थाखण्डाकारवृत्त्या तदज्ञाननिवृत्तिरिति, दर्शयत्यपि चेति—

अपि चावृतार्थविषया परोक्षधीर्वचसा च भग्नमनुभूयते
तमः। उपदेशमात्रमुपवर्ण्य
तत्पुनः श्रुतिराह दर्शयति पारमित्यपि ॥ ५ ॥

भवतु च परोक्षज्ञानम् आवृतार्थविषयकम् महावाक्येन तु तमः ब्रह्माज्ञानम् भग्नम् निवृत्तम् इत्यनुभूयते तत्त्वविद्भिः तथा श्रुतिः छान्दोग्यश्रुतिरपि यो वै भूमा तत्सुखमित्युपदेशमात्रमुक्त्वा तस्मै नारदाय तमसः पारं दर्शयति भगवान्सनत्कुमार इत्यपि स्वयमाह

अज्ञानस्योपदेशनिवर्त्यत्वेश्रुतिरपि मानमिति भावः ॥ ५ ॥

शब्दतोऽपरोक्षज्ञाने श्रुत्यन्तरं प्रमाणयति, विदधातीति—

विदधाति यच्च परमात्मदृष्टये श्रवणं विमृष्ट निगमान्तगोचरम् । श्रुतिमात्रतीर्णतमसो यदब्रुवन् जनकोसि तारयसि पारमित्यपि ॥ ६ ॥

यस्माच्चात्मावारे द्रष्टव्य इति बृहदारण्यश्रुतिः परमात्मसाक्षात्काराय विचारितवेदान्तविषयकम् श्रवणं विदधाति यत् यस्माच्च श्रवणमात्रेणोपदेशमात्रेण नष्टाऽज्ञानाः सुकेशादिशिष्याः जनकः पितासि त्वम् यतः पारं मान्तारयसीति चाब्रुवन् पिप्पलादगुरु-

म् एषा चाख्यायिका प्रश्नोपनिषदि तस्माच्चोक्तं सिद्धं ममेति भावः ॥ ६ ॥

ननुवेदान्तनये चिदभेदो विषयापरोक्ष्ये हेतुः स च वृत्तिद्वारकः सा चेन्द्रियद्वारेत्यस्त्येवेन्द्रियापेक्षेत्यत आह, चैतन्यस्येति—

चैतन्यस्यापरोक्ष्यं स्वरसनिजदृशो मुख्यमन्यानपेक्षं
गौणं तद्गोचरेष्वावरणविरहिते तत्र तादात्म्यवत्सु ।
वाह्ये चैतन्ययोगं घटयितुमुचिता वृत्तिरक्षप्रसूता
वाक्योत्था मोहमात्रं विघटयति चितः स्फूर्तिरन्यानपेक्षा ॥ ७ ॥

T

स्वभावतः स्वप्रकाशचैतन्यस्य आपरोक्ष्यम् मुख्यम् यतोम्यानपेक्षम् सर्वान्तरचिद्रूपे स्वाभेदस्य स्वतः सिद्धेर्नवहिर्मुखेन्द्रियापेक्षावृत्तिनिर्गमायेतिभावः तद्गोचरेषु स्वाक्षिचेतनविषयज्ञातृज्ञानज्ञेयेषु निरावरणे तत्र साक्षिणि तादात्म्येनाध्यस्तेषु आपरोक्ष्यं गौणम् इन्द्रियद्वारकवृत्त्या साक्षिसम्बन्धापेक्षत्वात् वहिर्भूतविषये हि चैतन्यसम्बन्धम् घटयितुमिन्द्रियजन्यावृत्तिरुचिता महावाक्योत्पन्नाखण्डाकारवृत्तिस्तु चितः चित्सम्बन्ध्यज्ञानमात्रं नाशयति स्फुरणं तु स्वरूपमेवेति स्वत एव न तु जड़स्येव वृत्तिप्रतिफलितचैतन्येनेत्यर्थः ॥ ७ ॥

वाह्यविषये तूभयं फलमाह, विषयेति—

विषयाप्रवोधदलनाय संविदो विषयोपरागजननायवाधि-

T

यम्। विषयाकृतित्वमुपनेतुमिष्यते विषयाक्षयोगसरणिस्तनोर्वहिः ॥ ८ ॥

शरीराद्बहिः विषयेन्द्रियसन्निकर्षरूपपन्थाः अवश्यमिष्यते। किमर्थम् धियमन्तःकरणम् घटादिविषयाकारतां प्रापयितुम् एतदपि कस्मै घटादिविषयकाज्ञाननाशाय वा अथवा संविदश्चैतन्यस्य घटादिसंबन्धजननाय प्रतिबिम्बद्वारा आध्यासिकविषयाभेदेन विषयदेशे स्फुरणाय ॥ ८ ॥

अथ सिंहावलोकनेनात्मानं परिचाययति, यदिति—

यत्नेक्ष्यं चक्षुराद्यैः प्रतिविषयममी येन संधुक्षितार्था यद्वा

गादेः पदं न व्यवहरति मुहुर्येन वागादिवर्गः। येन प्राणः प्रणीतस्तनुकरणमनो बुद्धयो येन चेष्टास्तच्छुद्धं स्वेन सिद्धं निरुभयमभयं बोधसत्सौख्यमात्मा ॥ ९ ॥

तत् शुद्धस्वप्रकाशाऽद्वयाऽभयम् सच्चिदानन्दस्वरूपम् आत्मा तत्किम् यत् चक्षुराद्यैर्ज्ञातुमशक्यम् अमी चक्षुरादयो येन प्रतिविषयम् सम्यक् प्रकाशितपदार्थकाः चित्प्रकाशेनैव स्वस्वविषयप्रकाशने समर्था इतिभावः यत् कर्मेन्द्रियगोचरो न येन वागादिः प्रवर्तते येन प्राणः स्वव्यापारे प्रवर्तितः येनैव च चैतन्येन शरीरेन्द्रियादयः इद्धाः प्रकाशिताः सन्तोनुभूयन्ते इत्यर्थः ॥ ९ ॥

अथासंभावनादिग्रस्तस्य रागाद्यस्थिर-चित्तस्य चात्मलाभायाहेत्थमिति–

इत्थं संबोधितस्याप्यनवहि-तमतेर्यस्य बोधो न वृत्तः स-स्याद्भूयो विचारव्यसनवशम-नाः सत्सहायः स्वतश्च । अ-क्षान्विक्षेपशान्त्यै चपलमपि मनोलालनैर्वा हठाद्वा रुद्ध्वा ध्यायेदनन्तं परमसुखचिदा-त्मानमेकं विविक्ते ॥ १० ॥

इत्थमुक्तप्रकारेण सम्यक्बोधितस्यापि सं-शयादिनात्मतत्त्वेऽनिश्चितबुद्धेः यस्य आत्म-ज्ञानं न सिद्धम् स विद्वत्सहायकस्सन्स्वतो वा भूयः पुनः पुनः विचारानुरागाधीनमनाः

T

स्यात् विचारमभ्यसेत् अथ रागादियुतस्तु चञ्चलतानिवृत्तये अक्षान् इन्द्रियाणि चपलं मनोऽपि रुद्ध्वा सदा स्वस्वविषये गतिमेषां निवर्त्य कथम् लालनैः किञ्चिदभिलषितसम्पादनेनाथ वा बलात् ततः शुचौ देशे एकम् अनन्तपरमसुखचिदात्मानं ध्यायेत् ॥१०॥

ध्यानमेवयोगरीतिप्रदर्शनेन निरूपयति, मुक्त्वेति—

मुक्त्वा सङ्गं सहिष्णुः शुचिहितमितभुक् योगशास्त्रार्थदर्शी पुण्ये निर्दोषदेशे यमनियमदृढः स्वासनस्थः प्रसन्नः। प्राणायामक्रमेणाहृतचपलमनः स्थूलसूक्ष्मे निरुध्य ध्या-

T

यन्नैकात्म्यसौख्यस्थिरगलित-
मना मोहबन्धं छिनत्ति॥११॥

ध्यानविरोधिसङ्गं त्यक्त्वा सहनशीलः पवित्रोपकारकशास्त्रोक्तप्रमाणयुतवस्तुभोक्ता योगशास्त्रार्थविचारशीलस्सन् पवित्रे पुण्यदेवा मशकाद्युपद्रवादिदोषरहिते देशे यमैर्नियमैश्च दृढ़ः कथमप्यविकम्प्यः अहिंसा सत्या स्तेय ब्रह्मचर्यापरिग्रहायमाः शौचसन्तोषतपः स्वाध्यायेश्वरप्रणिधानानि नियमाः स्वानुकूलासनस्थः प्रसन्नः क्षुत्तृषादिखेदरहितः शास्त्रोक्तप्राणायामक्रमेण विषयेभ्यः प्रत्याहृतं स्वभावतश्चपलं मनः प्रथमं स्थूले मूर्त्यादौ ततः सूक्ष्मे परमात्मनि बद्ध्वा तमेव ध्यायन् निरन्तरं जानन् रसयन् एकात्मसुखे स्थिरं गलितमेकीभूतं मनो यस्य तथाविधस्सन् अज्ञानबन्धनं नाशयति ॥ ११ ॥

कथमपि कृतात्मसाक्षात्कारो यावज्जीवं समधिस्थो वा यथारब्धं व्यवहरन्वा-न दुष्यतीत्याह, निरवधीति—

मालिनी।

निरवधिसुखभूमानन्तसंवि-त्परात्मन्यनुभवमधिरूढे वा-क्यतो योगतो वा । भवतु दृ-ढसमाधिर्लोकसंग्राहको वा भ-जतु विषयजातं नैति भूयोपि बन्धम् ॥ १२ ॥

महावाक्यतः योगेन वा निरवधिसुखबा-हुल्यरूपे पूर्णचैतन्यसर्वोत्कृष्टस्वरूपे आत्म-नि साक्षात्कारं प्राप्ते सति सदा दृढसमाधि-र्भवतु वा अथवा लोकशिक्षाभिप्रायकस्सन् उचितविषयान्भजतु सर्वथा पुनरपि बन्धनं न प्राप्नोति ॥ १२ ॥

आत्मसाक्षात्कारं स्तौति, अपीति—

**अपि भूपरमाणुभूरिसङ्ख्ये-
ष्वपयातेषु चतुर्मुखेष्वलब्धा-
त् । अपदुःखनिरन्तसौख्य-
सिन्धोर्न च लाभोस्ति परो
निजात्मलाभात् ॥ १३ ॥**

पृथिव्याः परमाणुभ्योप्यधिकसङ्ख्येषु हिरण्यगर्भेषु अपगतेषु अपि अलब्धात् तथा अपगतं दुःखं यस्मात्तादृशानन्तसुखसमुद्ररूपात् निजात्मलाभात् उत्तमो अन्यलाभो न वास्ति अयं भावः अनादिसंसारे असङ्ख्यवारमतिदुर्लभचतुराननत्वमपि प्राप्ताः का वार्ता क्षुद्रजन्मनाम् तथाप्यात्मलाभो न यात इति परमदौर्लभ्यमस्येति ॥१३॥

आत्मलाभोपि न वास्तवः किन्तु मोहा-
दप्राप्त इव विवेकात्प्राप्त इव भव-
त्यात्मेत्याह, मोहेति—

स्रग्धरा

मोहमात्रादलब्धस्य लाभ-
स्त्वसौ, स्वात्मनः कण्ठचामी-
करन्यायतः । बोधमात्रंतदा-
क्रम्य यस्मात्श्रुतिः प्राह भूयः
पदेनानुविन्देदिति ॥ १४ ॥

स्वात्मनः असौ पूर्वमुक्तो लाभस्तु बोध-
मात्रम् कीदृशस्य मोहमात्रात् अज्ञानादल-
ब्धस्य ना हि स्वात्मा कस्यापि कदाप्यल-
ब्धो भवितुमर्हति वस्तुतः केन कण्ठचामी-
करदृष्टान्तेन यथाकण्ठस्थसुवर्णभूषणमन्वे-
षमाणस्य कण्ठएवतेस्तीत्यन्येनोक्तस्य तद्बो-
धमात्रमेव लाभः यस्मात्कारणात् श्रुतिः आ-

त्मेत्येवोपासीतेति तत् ज्ञानमेवाक्रम्य प्रथममादाय भूयः पुनः पुनः अनेन ह्येतत्सर्वं वेद यथाहवैपदेनानुविन्देदिति प्राह यथा खुरचिह्नेन पशुं लभेत तथात्मज्ञानेन सर्वं वेदेतितदर्थः ॥ १४ ॥

नष्टमपि पुनः स्यादज्ञानं जगद्वदत
आह, वाधितमिति—

वाधितं स्यादसद्ध्वस्तवैधर्म्यतो मोहवाधोपि न ध्वंसरूपो परः । वाधबुद्धिश्चनाभावमात्रप्रथास्यादभावोप्यधिष्ठानरूपोथवा ॥ १५ ॥

वाधितम् असत् स्यात् कुतः ध्वस्तवैधर्म्यतः ध्वस्तं हि कार्यं संस्काररूपेण कारणे सदेव भवति तिरोभूतम् वाधितं तु न तथे-

ति वैषम्यात् मोहवाधोपि ध्वंसात्मकाभावरूपः अपरः अधिष्ठानादन्यः न वाधो हि त्रैकालिकविषयः ध्वंसस्तुतदानींतन इति अभावमात्रप्रथा अत्यन्ताभावमात्ररूपापि न वाधबुद्धिः यतो नायं सर्पः किन्तु रज्जुरियमित्यधिष्ठानमपि गृह्णानि अथवा अभावोपि अधिष्ठानरूपः स्यात् न पदार्थान्तरम् ॥

अधिष्ठानज्ञस्य न भयमित्याह,
कर्मजातमिति—

कर्मजातं समारब्धदेहेतरत्सत्वरं भस्मतामेति वोधाग्निना । श्लिष्यतेनैष्यताप्येष वोधोज्ज्वलः कर्मणा जीवनेनेव पद्मच्छदः ॥ १६ ॥

वोधाग्निना आरब्धो देहो येन तदन्यत्

सञ्चितकर्मजातम् शीघ्रम् भस्मताम् एति तथा एष्यता भविष्यता ज्ञानोत्तरं प्रारब्धवेगजकर्मणा ज्ञानेन निर्मलः एष तत्त्ववेत्ता न श्लिष्यते न लिप्यते केन किमिव जलेन कमलदलमिव ॥ १६ ॥

ननु प्रारब्धबाधोपि किं नेष्यते निखिलबाधे सामग्र्यभावेन भोगासंभवाच्छिष्टस्याप्यजागलस्तनायमानत्वादत आह, चोरेति—

चोरबाधेपि तज्जन्यभीत्यादिवच्चेलदाहेपि भस्मेव चेलाकृति । ज्ञानिनां विश्वमादेहपातं स्वतो बाधितत्वेपि चारब्धभोगक्षमम् ॥ १७ ॥

बाधितमपि जगत् ज्ञानिनाम् देहपतनप-

T

यन्तम् देहादौ प्रारब्धभोगस्य समर्थम् किं-
वत् स्वाप्नचोरबाधेपि कञ्चित्कालमनुवर्तमा-
नतज्जन्यभयकम्पादिवत् दग्धेपि वस्त्रे कञ्चि-
त्कालं प्रतीतवस्त्राकारभस्मवत् ॥ १७॥

एवमपि विदुषो ऽहन्ता ममताध्यासाभा-
वात्कथं भोग इत्याशङ्कामिष्टापत्त्या
परिहरति, जीवत इति—

जीवतोप्यस्य नह्यात्मबुद्धि-
स्तनौ वामलूरेप्यहेर्निर्ल्वयि-
न्यामिव । मोहमात्रात्परेक-
ल्पयन्त्यस्य चेद्देहितामस्तु
तद्धानिरस्येहका ॥ १८ ॥

जीवतोपि अस्य विदुषः तनौ ब्राह्मणोह-
मित्याद्यात्मबुद्धिः नहि नैव वामलूरे वल्मीके
त्यक्तायां निर्ल्वयिन्याम् स्वकञ्चुकत्वाचि ह-

T

श्यायामपि सर्पस्य यथात्मबुद्धि र्न तथा अथा-लुप्तयथार्थबोधस्योपकारबुद्ध्यारब्धबलेन वा-सोत्साहप्रवृत्त्यादिदर्शनेन परे अन्ये निजाज्ञा-नमात्रात् अस्य विदुषः देहितामजीवत्वम् क-ल्पयन्ति चेत् अस्तु कल्पितं तत्परेण तत् तस्मात् अस्य विदुषः इह स्वरूपे का हानिः न कापीतिभावः ॥ १८ ॥

प्रारब्धस्यापरिहार्य्यत्वे जयविजयादिव-द्विदुषोपि कदाचित्किंचिद्विलक्षणादृष्टा-त्स्यादेव जन्माद्यत आह,ईशतइति—

ईशते ज्ञाततत्त्वस्य नाभू-तये यत्नवन्तोपि सर्वेपि दे-वासुराः । को हि नामात्मनो निष्टकारी भवेदात्मभूतो य-तिस्त्वेष तेषामपि ॥ १९ ॥

ज्ञाततत्त्वस्य अभूतये अहिताय सर्वेपि देवासुराः यत्नवन्तः सन्तोपि न ईशते असमर्थाः हि यतः आत्मनः स्वस्य अनिष्टकारी को नाम भवेत् किन्तु न कोपि एष यतिस्तु सफलात्मज्ञानयत्नवाँस्तु तेषाम् देवासुराणाम् अपिना जगन्मात्रस्य आत्मभूतः चिदन्यभावानास्कन्दितान्तः करणत्वान्नतेविष्णुद्वारपालतुल्या इतिभावः ॥१९॥

रागाद्यभावान्नानिष्टकारी कस्यापि विद्वानिति न कोप्यस्याप्यनिष्टकारीत्याह, रागेति—

रागलोभप्रमादादिदोषक्षयान्नायमासज्जते दुश्चरित्रे क्वचित् । साधुवत्साधु चारित्र्यरक्षापरः साधुमार्गेण संस्कारतो वर्तते ॥ २० ॥

T

अयम् विद्वान् क्वचित् कदाचिदपि दुश्चरित्रे निषिद्धाचरणे न आसज्जते प्रवर्तते कुतः रागादिदोषक्षयात् किन्तु साधूनां सज्जनानां स्वधर्मानुष्ठानरूपचारित्र्यस्य पालन पर उद्युक्तः साधुवत् साधुमार्गेण सर्वप्राण्युपकारकमार्गेणैव प्रवर्तते कस्मात् संस्कारतः अनेकजन्मतस्तथैवाचरणजन्यसंस्कारबलात् ॥ २० ॥

अरागद्वेषजविकारत्वं विदुष आह,नेति—

न प्रहृष्यत्यसौ प्राप्यभूयः प्रियं मेरुवन्निश्चलो भूरिकृच्छ्रेष्वपि। भावयन्नात्मनात्मानमानन्दितो देववत्संचरत्येव विश्वम्भराम् ॥ २१ ॥

असौ ज्ञानी अतिशयेन बहुप्रियं प्राप्य न

प्रहृष्यति तथा वहुदुःखेष्वपि सुमेरुवन्निश्चलः न क्षोभं गतोभवति यतः आत्मानं सदा भावयन् आत्मनैवानन्दितः देववत् पृथिवीम् संचरत्येव न स्थैर्यमितिभावः ॥ २१ ॥

प्रारब्धवैचित्र्याद्वैचित्र्यं विद्वत्स्थितावाह, केपीति—

केपि वर्णाश्रमाचारनिष्ठा परामुग्धवालप्रमत्तोपमाश्चापरे। रागिणो भोगिनो योगिनश्चेतरे ज्ञानिनां लक्ष्यतेनैकरूपा स्थितिः ॥ २२ ॥

केपिवसिष्ठाद्याः स्ववर्णाश्रमाचारनिष्ठायामेवपरास्तत्पराः अपरे जड़भरतादयः अज्ञवालकग्रहग्रस्तसदृशाः इतरेसौभर्यादयः रागिणः सन्तो भोगिनः भोगतत्पराः जैगीष-

T

ब्यादयः योगिनः समाधिस्थाः इत्येवम् ज्ञानिनां स्थितिः आचरणम् एकरूपा न लक्ष्यते न दृश्यते ॥ २२ ॥

प्रायो नैव ज्ञायते विद्वच्चर्येत्याह, स्वानन्द इति—

शार्दूलवि०

स्वानन्दे सहजे सदा विहरतां स्वच्छन्दलीलाजुषां निस्सङ्गा च निरर्गला च जगतां कल्यणसंदोहिनी । मत्स्यानां सलिलेम्बरे च वयसां वायोरिवाशामुखे दुर्लक्ष्ये पथि योगिनां वहुविधा गूढा विचित्रा गतिः ॥ २३ ॥

योनिनां ज्ञानिनाम् दुर्लक्ष्ये पथि जनैदु-

ज्ञेयमार्गे लोकोपकारकाचरणरूपे गतिः अ-
नेकागूढाविचित्रा च भवति कीदृशानाम् ।
सहजे स्वानन्दे सदा विहरताम् तथा स्व-
च्छन्देन स्वेच्छया लीलाः कुर्वताम् गतिः
कीदृशी निस्सङ्गा सर्वसङ्गरहिता पुनः निर-
र्गला प्रतिबन्धरहिता पुनः जगताम् जना-
नाम् कल्याणस्य सम्यक् पूरणकर्त्री का इव
गूढानेका विचित्रा च जले मत्स्यानाम् आ-
काशे पक्षिणाम् दिशां मुखे वायोः गति-
रिव ॥ २३ ॥

सर्वोत्कृष्टत्वं विदुषो दर्शयति, योगीति—

योगिध्येयपदाम्बुजस्त्रिजग-
तां नाथो हरिः स्वं स्वयं शान्तं
नित्यमनुव्रजामि रजसा पूये-
यमित्यब्रवीत्।तस्माद्विश्वगुरोः

सुरासुरनरैरानम्य पादाम्बुजा-
दात्मानन्दनिमग्ननिश्चलमते-
रन्योत्र धन्योस्ति कः ॥ २४ ॥

अत्र संसारे तस्मादन्यो धन्यः कोस्ति न कोपि किन्तु स एव सर्वोत्कृष्टः कस्मात् योगिभिर्ध्येयं पादाम्बुजं यस्य सः त्रयाणां लोकाना नाथो हरिः यम् इत्यब्रवीत् इति किम् शान्तम् स्वम् ज्ञानिनम् ज्ञानीत्वात्मैव मे मतमित्युक्तेः अनु पश्चात् सदाहं व्रजामि तच्चरणरजसोद्धतेन पूये पवित्रो भवामि इति पुनः जगद्गुरोः पुनः सुरासुरनरैः प्रणम्य पादाम्बुजात् पुनः आत्मानन्दे प्रविष्टा सती निश्चला बुद्धिर्यस्य तथा भूतात् ॥ २४ ॥

अथ विदुषो नित्यतृप्तस्य लोकोपकाराय सहजचेष्टामाह,स इति—

सोयं पूर्णमनोरथोपि सह-

जात्कौतूहलात्पर्यटन्नुर्वीं सर्वहिते रतः प्रतिपदं स्वानन्दमास्वादयन् । साश्चर्यं सकुतूहलं सकरुणं सानन्दमुत्कण्ठया धीरः पारमवाप्य मोहजलधेरेवं मुहुर्गायति ॥ २५ ॥

सोयं धीरः विद्वान् दुर्ज्ञेयं कथं मयाज्ञायीत्याश्चर्येण कथमपि मयात्वनुभूयते एवेति कुतूहलेन अन्येप्यहमिव कथं स्युरिति करुणया कृतार्थोऽस्मीत्यानन्देन च सहितं यथा स्यात्तथा एवम् वक्ष्यमाणरीत्या मुहुः पुनः पुनः गायति वदति कया उत्कण्ठया स्वलाभानन्दप्रकटीकरणोत्कृष्टेच्छया कीदृशः मोहसमुद्रस्य पारं प्राप्य पूर्णमनोरथोपि स्वाभाविककौतूहलात् न तु प्रयोजनवशातः

पृथ्वीं सर्वतो गच्छन् सर्वहिते तत्परः पदे पदे स्वरूपानन्दमनुभवन् ॥ २५ ॥

लोकसंग्रहाय गुरुं तावद्ध्यायति चिरादिति-

चिरान्मग्नेनान्तःप्रकृतिविषमे जन्मजलधौ मया पुण्यैर्लब्धो गुरुरमृतचिन्तामणिरहो। यदीयाभिर्गोभिर्विशदमधुराभिर्वितिमिरे स्वसंपूर्णे यस्मान्निरवधिसुखे धामनि रमे॥

प्रकृतिविषमे सहजसंकटे जन्मसमुद्रे अन्तरधः वहुकालादारभ्य निमग्नेन मया अहो इत्याश्चर्ये पुण्यप्रभावेण गुरुरूपः अमृतचिन्ताप्रदोमणिर्लब्धः यस्य गुरुमणेः स्वच्छप्रियाभिः वाग्रूपाभिः गोभिः प्रभाभिः निरस्ता-

न्धकारे बोधिते स्वसंपूर्णे आत्मना व्याप्ते रहसीति यावत् परमानन्दे धामनि ज्योतीरूपगृहे यस्माद्धेतोः अहम् रमे क्रीडामि॥२६॥

स्वानुभूतविद्याऽविद्याफलं वदति, यथेति—

यथापूर्वं मायापरिकलितदृष्टिर्निजसुखं स्वयं भातं पश्यन्नपि न परिपश्यामि सहजम्।
तथेदानीं ज्ञानाञ्जनविमलचक्षुर्जगदिदं चिदाकाशे पश्यन्नपि न परिपश्यामि वितथम्॥

ज्ञानात्पूर्वम् सहजम् स्वयं भातम् निजानन्दम् पश्यन्नपि सर्वत्रप्रतीतमानन्दमनुभवन्नपि मायाच्छादितदृष्टिः सन् न पश्यामि अयमेव चिदात्मेति न ज्ञातम् यथा तथा

T

इदानीम् ज्ञानरूपाञ्जनेन निर्मलदृष्टिः सन् चिद्रूपाकाशे वितथमनृतमिदं जगत् पश्यन्नपि सत्यतया न पश्यामि ॥ २७ ॥

स्वात्मानुभूत्या तिरोहितं जगदित्याह, नेति —

न वेद्यो नावेद्यः स्वरसमतिहृद्यः सुखघनो न गद्यो नापोद्यो न पुनरुपरोध्यः कथमपि । न हेयो नादेयो न पुनरपिधेयः क्षणमहो स्फुरन्नात्मास्माकं जगदिदमकस्मात्तिरयति ॥ २८ ॥

अखण्डाकारवृत्या स्फुरन् साक्षात्कृतः अस्माकमात्मा अहो इत्याश्चर्यें अकस्मात् अ-

नायासेन शीघ्रम् इदं जगत् तिरोहितं करोति आत्मा कीदृशः स्वरसम् अतिहृद्यः स्वभावतः परमप्रियः यतः सुखैकमूर्तिः अतएव न वेद्यः अज्ञेयः तथा अवेद्यो न आत्मत्वात् तथा वाचा न गद्यः तथा अपोद्यः निषेध्यः न आत्मरूपत्वात् पुनः सर्वात्मत्वात् कथमपि उपरोध्यः निरोध्यः पुनः क्षणमात्रमपि अपिधेयः आच्छाद्योपि न तथा असङ्गत्वात् त्याज्यो ग्राह्यश्चयो न ईदृशः ॥२८॥

अनिर्वचनीयजगतस्तिरोधानमपि
तादृगेवेत्याह, किमिति –

किमस्तं किं ध्वस्तं किमु विलुलितं किन्नु गलितं विशीर्णं चागीर्णं ननु सपदि जीर्णं किमथवा। अमन्दे स्वच्छन्दे नि-

T

रूपमनिजानन्दजलधौ मयि स्वान्ते शान्ते जगदिदमशेषं न कलये ॥ २९ ॥

मयि मत्स्वरूपे स्वान्ते मनसि शान्ते लीने सति इदमशेषं जगत् न कलये क्क कथं किमभूदिति न जानामि मयि कीदृशे अमन्दे प्रकाशचिद्रूपे पुनः स्वच्छन्दे वस्त्वन्तराभावात्स्वाधीने अतुलात्मानन्दसमुद्रे इदं जगत् किं सूर्यादिवदस्तम् किंवा घटादिवत् ध्वस्तम् किंवा मर्दनं प्राप्तम् किंवाग्निसंयोगे घृतमिव विलीनम् किंवा चिरविकसितशिथिलदलमूलपवनपीड़ितशतपत्रमिव विशीर्णम् किंवा सर्पमुखे भेकशरीरमिव आगीर्णम् नन्विति वितर्के अथवा किं सपदि शीघ्रम् मितागुरुभुक्तान्नमिव जीर्णम् सर्वत्र केनचिद्रूपेण पृथक् सत्ता दृश्यते जगतस्तु नेति भावः ॥ २९ ॥

T

उत्पत्त्यादेरप्यनिर्वचनीयतामाह, कथमिति-

कथमिदमभवत्कथन्नु तिष्ठत्यथ कथमेति लयं प्रतीचि विश्वम्। विमलदृशि निजे निरस्तसङ्गे पटु परिमृश्य मृषेति निर्वृतोऽस्मि ॥ ३० ॥

पटु

विमलदृशि शुद्धचेतने निरस्तसङ्गे स्वेतरवस्तुसंबन्धशून्ये निर्विकारे इति द्वयोर्भावः निजे अकृत्रिमरूपे प्रतीचि प्रत्यग्ब्रह्मणि इदं जगत् कथम् अभवत् नु इति वितर्के कथं तिष्ठति अथ अनन्तरम् कथं लयम् एति एवम् पटु निपुणं यथा स्यात्तथा परिमृश्य विचार्य मृषा जगदिति निश्चित्य निर्वृतोऽस्मि सुख्यस्मि उक्तविधे जगत एतत्त्रयं न संभवतीति व्यर्थोयं स्वाप्नमोदकनिर्माणा-

दिविचार इव विचार इति भावः ॥३०॥

प्रकारान्तरेणोत्पत्त्यसंभवमाह, निराधारेति–

निराधाराकारं निरवयवसं-
स्थानमचलं निरीहं निर्द्वंद्वं
निरुपमनिजानन्दविभवम् ।
विनोपायं स्वीयं करणसमुदा-
यं च परमं कथं तन्निर्मायं त्रि-
भुवननिकायं रचयति ॥३१॥

आधारेण देहेन च रहितम् अवयवरचना-
शून्यम् हस्तादिरहितम् निश्चेष्टम् निरीहम्
निःस्पृहम् अद्वयम् अतुलात्मानन्दरूपैश्वर्य-
वत् पुनः निर्मायम् मायासंबन्धशून्यम् मा-
यासंबन्धे असङ्गत्वक्षतेरिति भावः ईदृशं त-
त्परमम् ब्रह्म वाह्योपायं विना स्वीयम् अ-

न्तरङ्गम् चक्षुरादिकरणसमुदायं च विना त्रिभुवनरूपगृहम् कथं रचयति कथमपि रचना न संभाव्येति भावः ॥ ३१ ॥

पालनासंभवमाह,न भृत्या इति—

न भृत्या नामात्या न खलु विषया नैव च विना न चाशून्याः कोशा न च पुरनिवेशा न सुहृदः। तथाप्यात्मैकाकी निजबलवराकीमरिचमूं विजित्यैतद्विश्वं भुवनमवतीत्यद्भुतमिदम् ॥ ३२ ॥

भृत्याः भर्तव्याः देहादयो भटा वा न सन्ति तथा अमात्याः बुद्ध्यादयो मन्त्रिणो वा न तथा निश्चयेन शब्दादयः प्रदेशा वा वि-

षया न तथा इन्द्रियाणि तुरगा वा न तथा अशून्याः सत्याः पूर्णा वा कोशाः अन्नमयादयः धनगृहा वा न तथा पुरनिवेशाः शरीरत्रयाध्यासाः ग्रामनिवेशा वा न तथा सुहृदः शुभव्यापारा मित्राणि वा न सन्ति तथापि एकाकी असहायः अद्वयो वा आत्मा निजवलवराकीम् स्वरूपवलेन वाहुवलेन वा तुच्छीकृतां तिरस्कृताम् वा कामादिसेनाम् शत्रुसेनां वा विजित्य एतत्सकलं जगदवति पालयति इदमद्भुतम् परमाश्चर्यम् ॥ ३२ ॥

संहारसंभवमाहासङ्गेति—

असङ्गोदासीनः स्वरसपरमानन्दसुहितो जिघत्सानिर्मुक्तश्श्रिततनुरपाण्यङ्घ्रिजठरः।
अमायोप्यात्मासौ स्वयमन-

T

वकाशोऽपि सहसा समायं त्रैलोक्यं कवलयति कस्मात्कथमहो ॥ ३३ ॥

सङ्गहीनः निश्चेष्टः सहजोत्कृष्टानन्दतृप्तः भोजनेच्छारहितः चिच्छरीरः अहस्तपादोदरः मायारहितः तथा स्वयम् स्वरूपतः स्वभावतो वा छिद्ररहितः ईदृशोऽप्यसौ आत्मा मायासहितत्रिलोकं कस्माद्धेतोः केन प्रकारेण ग्रसति अहो आश्चर्यमेतत् ॥ ३३ ॥

निजबोधदार्ढ्यं सूचयति, मुहुरिति—

मुहुर्मूढैर्न्यस्तं भृशमपलपाम्यर्थनिचयं न कश्चिद्विश्वास्यो न मम यमदण्डादपि भयम् । गुणद्वेषी स्वार्थप्रिय इति

T

**जगद्वञ्चनपरं चारित्रं मे चित्रं क्वचिदपि न कश्चित्कलयति॥**

मूढैः अज्ञैः वारंवारम् सत्यतयारोपितम् पदार्थसमूहम् जगत् भृशम् अत्यर्थम् निन्हवे कश्चिद्विश्वसनीयोपि मम न यमदण्डादपि न मम भयम् तथा निर्गुणत्वाद्गुणद्वेषो आत्मरूपोर्थः प्रियो यस्य तादृशश्चाहम् इति उक्तम् जगतः सर्वस्वहरणोपायवरम् मे चित्रं चरित्रम् क्वचिदपि कश्चिदपि न जानाति लोकेपि पञ्चकः मूढस्थापितधनं हरति सर्वत्राविश्वासी नरकनिर्भयः गुणवञ्चनद्वेषी स्वप्रयोजनप्रियः दुर्ज्ञेयचरित्रो भवतीति भावः ॥ ३४ ॥

सर्वाभावेपि न मम काचिद्धानिरित्याह, नेति –

**न तातो नो माता सुहृदपि**

T

न मे धामनि धनं न चान्नं पानं वा न सततगतिर्नाम्बरमपि । चरन्तं कृत्स्नं मामहह नहि लोकोपि विमृशत्यहो मे दौर्गत्यं तदपि सुखसाम्राज्यमतुलम् ॥ ३५ ॥

मे मम तातः जनकः माता परिच्छेदकः हितकारी बन्धुः मनः शरीरगृहे धनम् दीर्घजीवनहेतुः अदनीयम् पेयम् जलम् तथा सततगतिः सदापालको बन्धुर्वायुः वसनमाकाशोपि नास्ति कृत्स्नम् चरन्तम् सर्वम् व्याप्नुवानम् माम् लोकोपि इन्द्रियोपि मूढजनोपि वा नहि विमृशति अहहेति खेदे यद्यपि ममेत्थम् दुर्गमत्वम् अस्ति तथापि उपमाशून्यम् सुखाधिक्यम् अस्तीत्यहो आ-

श्चर्यम् यदि कश्चित् मातृपितृसुहृद्धीनः गृहे च धनहीनः अन्नहीनः दुग्धादिहीनः सदापालकसहायकहीनः वस्त्रहीनः भोजनाद्यर्थं सर्वत्र चरन् न केनाप्यनुकम्प्येत इत्थं दारिद्र्यं गतोपि परमसुखी स्यात्तर्ह्याश्चर्यमेवेति लोकोक्तिः ॥ ३५ ॥

आश्चर्यान्तरमाह, यदिति —

गीतिः

यद्विश्वं यदविश्वं यद्बहिरन्तश्च नो वहिर्नान्तः । यद्भवपारमपारं तदनहमहमस्मि विस्मितः स्वेन ॥ ३६ ॥

यद्वस्तु विश्वम् जगद्रूपम् वस्तुतस्तु यत् विश्वाकारं न तथा यत् सर्ववस्तुनः वहिः अन्तश्च परमार्थतस्तु जगदेव नास्तीति न वहिः नान्तः पुनः यत् संसारसमुद्रस्य पारम्

भवात्परोदेशः स्वयं तु अपारम् अवधिहीनम् तद्वस्तु अनहम् अहङ्काराभावादहंपदा वाच्यम् अहमस्मि इति भावयन्स्वेनैव स्वयं विस्मितोस्मीत्यर्थः ॥ ३६ ॥

स्वस्य हिरण्यगर्भतामाह, नेति—

न सत्यो मे लोको न खलु पुनरोकः सरसिजं रजःसङ्गो दूरे न मयि विधिशब्दः प्रभवति । न वाग्भिः संसर्गो न च विषमसर्गव्यसनिता तथापि ब्रह्माहं निगमनिकुरम्बं गदति तत् ॥ ३७ ॥

मे मम कोपि लोकः सत्यो न खल्विति प्रसिद्धौ पुन कमलम् हृदयम् ओकः गृहम्

न पुनः रजसा रागादिमालिन्येन सङ्गोपि दूरे तथा मयि यजेतेत्यादि विधिशब्दः न समर्थोभवति सर्वान्तर्यामित्वेन प्रेर्यत्वासंभवात् तथा वाग्भिः तत्त्वमस्यादिभिः संसर्गो नासङ्गत्वात् तथा विषमसर्गे संकटसंसारे व्यसनिता दुःखितापि न तथाप्यहम् ब्रह्मा यतः एष ब्रह्मैष इन्द्र इत्यादिवेदसमूहम् तत् ब्रह्मत्वम् गदति हिरण्यगर्भस्य तु सत्यो लोकः कमलं गृहम् राजसत्वम् विधिसंज्ञा सरस्वतीसंसर्गः नानाविधवस्तूत्पादने तत्परता प्रसिद्धा ॥ ३७ ॥

उपेन्द्रवज्रा विष्णुत्वमाहाहमिति—

अहं न मायी न च भोगिशायी न चक्रधारी न दशावतारी । न मे प्रपञ्चः परिपा-

लनीयस्तथापि विष्णुः प्रभावि-
ष्णुरस्मि ॥ ३८ ॥

शुद्धचिद्रूपोहम् मायी न न च भोगिरू-
पेणान्तःकरणशायी तथा संसारचक्रधारी न
जाग्रदादिदशासु अवतरणशीलोपि न तथा
मे मम संसारः स्थापनीयोपि न सत्यतया त-
थापि प्रभविष्णुः प्रसिद्धः सर्वज़गदीश्वरो
विष्णुरहमस्मि व्यापनशीलत्वादितिभावः प्र-
सिद्धविष्णुश्च मायी शेषशायी चक्रायुधी
मत्स्याद्यवतारी संसारपालकः प्रसिद्धः ॥३८॥

शिवत्वमाह,नेति—

न मूर्तयोष्टौ विषमा न दृ-
ष्टिर्न भूतिलेपो न गतिर्वृषेण ।
न भोगिसङ्गो न च कामभङ्ग-

T

स्तथापि साक्षात्परमोऽस्मि शिवोऽहम् ॥ ३९ ॥

अण्डजस्वेदजोद्भिज्जजरायुजाप्यतैजसवायवीयमानसरूपाष्टशरीराणि मम न भेददृष्टिरपि न जन्मसंबन्धो न तथा वृषेण धर्मेण तत्तल्लोकगमनमपि न भोगिभिः जीवैरप्यसङ्गः इच्छा विघातोपि न इच्छाया एवाभावात् तथापि सर्वोत्कृष्टः साक्षात् शिव एवाहमस्मि अविनाशित्वात् महादेवस्तु पञ्चभूतसोमसूर्ययजमानमूर्तिः त्रिलोचनः भस्मधारी वृषभवाहनः सर्पभूषणः दग्धकामः प्रसिद्धः उक्तदेवत्रयानन्दा अपि परमानन्दात्मानन्दान्तर्भूता एवेति पद्यत्रयभावः॥३९॥

स्वस्य परमपदस्थितिं रूपकेणाह,

जाग्रदिति—

जाग्रत्सुप्तिस्वपनविपिने गा-

हमानोप्यसङ्गः सत्वोत्कर्षात्क-
रणहरिणैर्नैक्षणीयः पराग्भिः ।
लीलावृत्तिप्रशमितमहामोह-
मत्तेभजालः कालातीते वि-
लसति पदे स्वात्मकण्ठीरवो
नः ॥ ४० ॥

नः अस्माकम् निजप्रत्यगात्मसिंहः त्रिका-
लाबाध्ये पदे स्वरूपे विलसति प्रकाशते की-
दृशः अवस्थात्रयवने विहरन्नप्यसङ्गो न त-
द्धर्मभाक् पुनः पारमार्थिकसत्ता सामर्थ्यात्
हेतोः पराग्भिः विमुखतया पलायमानैः इ-
न्द्रियहरिणैर्न दर्शनीयः पुनः श्रवणादिली-
लया जाताखण्डवृत्त्याविनाशितमूलाज्ञानरू-
पमत्तगजसमूहः ॥ ४० ॥

T

पवित्रीकरोति जगज्जीवन्मुक्त इत्या-
हेत्यादिभिरिति—

इत्यादिभिर्भुवनजाड्यहरैः सु-
गोभिः सत्योज्ज्वलैः श्रुतिसु-
खैरमृतप्रबोधैः । आनन्दय-
न्प्रतिपदं प्रणतान्सभाग्याना-
शाः पवित्रयति भानुरिव प्र-
बुद्धः ॥ ४१ ॥

प्रबुद्धो ज्ञातज्ञेयः आशाः दश दिशः पवित्र-
यति किंकुर्वन् इत्यादिभिः सुगोभिः उक्त-
शुभवाक्यैः सभाग्यान् सुकृतीन् प्रणतान्
कृतप्रणामान् जिज्ञासून् पदं पदं प्रति आ-
नन्दयन् कीदृशैः लोकाज्ञानहरैः पुनः सत्या-
र्थकैः निर्मलैर्दीप्तैर्वा पुनः श्रवणसुखदैः पुनः

अमृतमिव प्रबोधयन्ति जीवयन्तीति तैः क-इव भानुरिव अत्रपक्षेलोकशीतहरैः ईश्वरप्र-काशितैः यागादिप्रवर्तकत्वेन वेदसुखदैः सु-गोभिः शुभकिरणैः अन्यत्पूर्ववत् ॥ ४१ ॥

कृतात्मसाक्षात्कारं स्तौति, धन्य इति—

धन्यः स एव कृतकृत्यतमः
समस्तमान्यः स एव कुलमस्य
च धन्यधन्यम् । संन्यस्य क-
र्मनिगड़ं श्रुतिसारसौख्ये वि-
न्यस्य चित्तमभयात्मनि नि-
र्वृतो यः ॥ ४२ ॥

कर्मनिगड़म् गतिविघातकलोहशृङ्खला-रूपं कर्म सन्यस्य सम्यक् सवासनम् फल-तस्त्यक्त्वा श्रुतिसारांशसुखरूपे अद्वयत्वेना-भयरूपात्मनि चित्तं स्थापयित्वा यः निर्वृत-

स्सदानन्द आस्ते स एव धन्यः उत्तमः अतिशयेन कृतार्थः सर्वमान्यः अस्य कुलं तु धन्येभ्योपि धन्यम् यतस्तस्यानायासत ईदृक् सुखलाभयोग्यता ॥ ४२ ॥

विदुषो विदेहमुक्तिमाहैवमिति—

एवं विहृत्य सुचिरं परिपूर्णकामः कारुण्यपूरपतितोद्धरणप्रवीणः। प्रारब्धशेषविगमे गतसर्वशोकः स्वाराज्यसौख्यजलधिर्निरुपाधिरास्ते ॥ ४३ ॥

दयाप्रवाहनिमग्नोद्धारप्रवीणः सिद्धसर्वमनोरथः एवमुक्तरीत्या बहुकालं विहरणं कृत्वा निखिलप्रारब्धक्षये निवृत्ताखिलदुःखप्रतीतिः निरुपाधिः विगतदेहः सन् स्वयं प्रकाशानन्दसमुद्रमात्रस्तिष्ठति ॥ ४३ ॥

तस्य पुनर्विकारशङ्कामपनुदति नोदेतीति-

नोदेति नास्तमुपयाति न वृद्धिमेति नापिक्षयं च भजते निजतेजसेद्धः । पूर्णस्सदैव सहजेन सुखामृतेन निर्लाञ्छनः स्फुरति कोपि निजात्मचन्द्रः॥

उदयास्तौ वृद्धिह्रासौ च यो न याति स्वभासैव प्रकाशमानः स्वाभाविकानन्दामृतेन सदापरिपूर्णः द्वैतलाञ्छनशून्यः स ईदृशः कोपि अनिर्देश्यः स्वात्मरूपचन्द्रमा विराजते॥ ४४॥

अथानेकरूपकतो निखिलवेदान्तविषयविषयकोत्कर्षमवसाने निरूपयति, विश्वेति-

शार्दूल वि०

विश्वानन्दतुषारसिन्धुरखिलज्ञानस्फुलिङ्गानलः प्रच्छ-

न्नासिलता च कोशकुहरे द्वैत-भ्रमच्छेदिनी । मोहध्वान्त-विभाकरः परिलसन्वेदान्त-सीमन्तिनी मौलिस्थानमणिः सदा विजयते संविन्मयः पूरुषः ॥ ४५ ॥

संविन्मयः चिद्रूपः पूरुषः प्रत्यगात्मा सदा विजयते सर्वोत्कर्षेण वर्तते कीदृशः सकलानन्दरूपहिमकणानां समुद्रः पुनः सकलज्ञानरूपाग्निकणानां मूलभूताग्निः पुनः पञ्चकोशच्छिद्रे हृदये प्रच्छन्ना गूढाद्वैतभ्रमच्छेदिनी खड्गलता पुनः अज्ञानाविवेकरूपान्धकारसूर्यः पुनः सर्वतः स्फुरन् उपनिषद्वधूशिरःस्थमणिः ॥ ४५ ॥

ग्रन्थनाम सूचयन्नधिकारिभ्य आशी-
राह, शान्त्यादीति—

वसंति०

शान्त्यादिदिव्यमणिभूषण-
मण्डितानां वेदान्तवारिधिसु-
धारसलालसानाम् । कैवल्य-
कल्पतरुमूलमुपाश्रितानां स्वा-
राज्यसिद्धिरियमस्तु मुदे बुधा-
नाम् ॥ ४६ ॥

इयं स्वाराज्यसिद्धिः बुधानाम् पण्डिता-
नाम् मुदे हर्षाय भवतु कीदृशानाम् शान्ति-
दान्त्यादिभिर्दिव्यमणिभूषणैः परमानन्दहे-
तुभिः शोभितानाम् पुनः वेदान्तसमुद्रसंब-
न्धिसुधासदृशरसे आत्मनि अत्यन्तस्पृहायु-
क्तानाम् पुनः मोक्षकल्पवृक्षमूलम् ब्रह्मवि-
द्गुरुचरणम् उपगतानाम् श्रवणायेतिभावः

T

लोकेपि स्वाराज्यसिद्धिश्चक्रवर्तित्वं पुण्यवतामेव महतां भवति न क्षुद्राणामिति निष्कर्षः ॥ ४६ ॥

स्वस्य निष्कामतां ध्वनयन् निजग्रन्थेनेष्टदेवतां यजति, वाक्येति—

वाक्यपुष्पाञ्जलिः सेयं भक्त्या न्यस्ता पदाब्जयोः ।
धियः प्रेरकयोरस्तु शिवयोः प्रीतिसिद्धये ॥ ४७ ॥

वाक्यरूपाणां पुष्पाणामञ्जलिर्या इयम् स्वाराज्यसिद्धिः भक्त्या चरणकमलयोः समर्पिता सा बुद्धेः प्रेरकयोरुमामहेश्वरयोः प्रीत्युत्पत्तये भवतु ॥ ४७ ॥

इति श्रीमत्स्वाराज्यसिद्धौ तृतीयं प्रकरणम्

समाप्ता चेयं स्वाराज्यसिद्धिः ।

१९०८ वै. सं.

वसुवेदनवब्रह्ममितेऽब्दे नृप-
विक्रमात् । भाद्रे दलेऽमले
विष्णोस्तिथौ भौमस्य वासरे ॥

पूर्णानन्दपदानन्दभास्करा-
नन्दसत्कृतिः । पूर्णानन्दवने
काश्यां दुर्गाकुण्डमिलत्तटे ॥ २ ॥

व्याख्यातो बुद्धितः क्वापि
क्वापि नीतात्र योजना । सभा-
वा भावुकास्तेन तुष्यन्तु गत-
मत्सराः ॥ ३ ॥

विश्वेशपुण्यपुञ्जाभ्यां सिद्धा-

T

स्सर्वैर्मनोरथाः । तथैष काश्यां
चरमोऽनन्तरामाद्गुरोर्मम ॥४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्री-
स्वामिभास्करानन्दसरस्वतीसङ्क्षिप्ता
कैवल्यकल्पद्रुमाख्या स्वाराज्यसि-
द्ध्याख्या पूर्तिमगात्—
विजयतेतरां सशिवश्शिवः ।

T

